# सत्याग्रहगीता

Satyagrah Geeta

(Sanskrit Poetry)

पं. क्षमा राव

Pt. Kshama Rao

न. मा. त्रिपाठी प्रा. लि., मुम्बापुरी २

॥ श्रीगणेशाय नमः ॥

# सत्याग्रहगीता

पण्डिता सौ. क्षमा राव

तृतीयावृत्तिः

शा. श. १८७९
इ. स. १९५७

प्रथमावृत्तिः १९३२ पॅरिसनगर्याम्
द्वितीयावृत्तिः १९५६ मुम्बापुर्याम्
तृतीयावृत्तिः १९५७ मुम्बापुर्याम्

ग्रन्थकर्त्र्या दुहित्रा
'लीला राव दयालु' इत्येतया
३७, न्यू मरिन लाइन्स, मुम्बापुरी १, इत्यत्र
प्रकाशिता ग्रन्थस्वामित्वस्य सर्वेऽधिकाराः
स्वायत्तीकृताश्च ।

**मूल्यं रूपकद्वयमष्टा आणकाश्च**

रु. २-८-०

'श्रीनिकेतन बाळकृष्ण ढवळे' इत्यनेन
मुम्बापुर्यां कर्णाटकमुद्रणालये मुद्रिता ।

॥ श्रीः ॥

# सत्याग्रहगीता

---

## प्रथमोऽध्यायः

गम्भीरो विषयः कार्यं श्रेष्ठः सत्याग्रहात्मकः ।
कृत्स्ने जगति विख्यातः क्व मे लघुतमा मतिः ॥ १ ॥

शब्दगौरवहीनाहं युद्धस्यैतस्य गौरवम् ।
व्याख्यातुमसमर्थास्मि गुणैर्दिव्यैर्विभूषितम् ॥ २ ॥

तथापि देशभक्त्याहं जातास्मि विवशीकृता ।
अत एवास्मि तद्गातुमुद्यता मन्दधीरपि ॥ ३ ॥

दुहिता शङ्करस्याहं पण्डितस्य क्षमाभिधा ।
अक्षमापि कवेर्मार्गे श्रोतव्या वस्तुगौरवात् ॥ ४ ॥

भारतावनिरत्नाय सिद्धतुल्यमहात्मने ।
गान्धिवंशप्रदीपाय गीतिमेनां समर्पये ॥ ५ ॥

बहुवर्षाणि देशार्थं दीनपक्षावलम्बिना ।
कृषिकाणां सुमित्रेण कृतो येन महोद्यमः ॥ ६ ॥

यश्चापूर्वगुणैर्युक्तः पूज्यतेऽखिलभारते ।
सतां बहुमतो देशे विदेशेष्वपि मानितः ॥ ७ ॥

मनस्विनस्त्रयस्त्रिंशत्कोटिनृणां हितैषिणः ।
पुण्यं शुद्धात्मनः पुण्यात्सिद्धानां चातिरिच्यते ॥ ८ ॥

वीतरागो जितक्रोधः सत्याहिंसाव्रतो मुनिः ।
स्थितधीर्नित्यसत्त्वस्थो महात्मा सोऽभिधीयते ॥ ९ ॥

अपूर्वकीर्तियुक्तस्य निर्ममस्यानहङ्कृतेः ।
माहात्म्यमस्य भूपानां वैभवादतिरिच्यते ॥ १० ॥

विनीततमवेषोऽसौ विलासविरतान्तरः ।
निर्धनान् महता दैन्येनातिशेते निजेच्छया ॥ ११ ॥

क्षुत्पिपासाभिभूतेषु ग्रामीणजनकोटिषु ।
अल्पान्नेन निजं देहमस्थिशेषं चकार सः ॥ १२ ॥

पुरा किलाफ्रिकाखण्डं भारतीया हि केचन ।
वाणिज्यव्यवसायार्थमगच्छन् परिवारिणः ॥ १३ ॥

अथ गच्छत्सु वर्षेषु पीडितास्ते निवासिभिः ।
बोरादिभिः सुगौराङ्गैः कृष्णवर्णदुराग्रहैः ॥ १४ ॥

तद्भयान्मोक्षमिच्छन्तो न्यायधर्मविशारदम् ।
महात्मानमयाचन्त साहाय्यं परमं जनाः ॥ १५ ॥

क्लेशार्तानां परं मित्रं सत्यवाग् गान्धिवंशजः ।
बान्धवानां विमोक्षार्थमाफ्रिकादेशमव्रजत् ॥ १६ ॥

जातमन्युः पराक्षेपाद् वसन् विंशतिवत्सरम् ।
स्वबन्धूनां हितार्थाय शत्रुभिर्युयुधेऽभयः ॥ १७ ॥

बोरादिभिर्विदेशीयाः पशुवत्ते खलीकृताः ।
त्रासिता नैकनिर्बन्धैर्दुःसहैः शासनाभिधैः ॥ १८ ॥

तेन त्रिंशतिवर्षं हि सततं शान्तचेतसा ।
अनुद्वेगकरोपायैरुद्यमः साधुना कृतः ॥ १९ ॥

आङ्ग्ललोकान् स विज्ञाप्य भारतीयपरिस्थितिम् ।
अल्पं फलागमं दृष्ट्वा व्यसृजद्देशमाङ्गलम् ॥ २० ॥

प्रौढेन वयसा युक्तोऽप्यानतः क्लेशसञ्चयैः ।
न्यवर्तत निजं देशं दीनं दुर्भिक्षपीडितम् ॥ २१ ॥

ग्रामीणानां क्षुधार्तानां क्षेत्रे क्षेत्रेऽपि निर्जले ।
दृष्ट्वास्थिपञ्जरान् भीमान् विषण्णोऽभूद्दयाकुलः ॥ २२ ॥

इतैररवधूतानामन्त्यजानामवस्थया ।
द्रवीभूतो महात्मासौ दीनानां गौतमो यथा ॥ २३ ॥

निर्धनत्वाज्जनुर्भूमेः पारवश्याच्च बान्धवाः ।
तिरस्कृता भवन्तीति प्राज्ञेन किल निश्चितम् ॥ २४ ॥

वयमाङ्ग्लयुगे बद्धा भविष्यामोऽधिकाधिकम् ।
विवशा दुर्बलाश्चेति बोधितं दूरदर्शिना ॥ २५ ॥

इहाङ्ग्लैः स्थापितं राज्यं देशलुण्ठनलोलुपैः ।
इत्यस्थिपञ्जरा एव जनानामत्र साक्षिणः ॥ २६ ॥

अहो घोरमिदं पापमौदासीन्यं जनेषु वः ।
भोगैश्वर्यप्रसक्तानामतिनिन्द्यं यशोहरम् ॥ २७ ॥

किमुत्तरं कृतीनां वः परलोके प्रदास्यथ ।
इति राज्याधिकारस्थानपृच्छद्धीरचेतनः ॥ २८ ॥

स्वबान्धवानसौ पौरान्मोहसुप्तानबोधयत् ।
स्वधर्मः परमो धर्मो न त्याज्योऽयं विपद्यपि ॥ २९ ॥

कर्षकाणां स्थितिं तेषां कष्टमूलं च वेदितुम् ।
त्यक्तभोगो विपद्बन्धुर्ग्रामे ग्रामे चचार सः ॥ ३० ॥

अनावृष्ट्या हते शस्ये दुर्भिक्षं समजायत ।
तस्मादथ कराधिक्याद्दीनानां कष्टसम्भवः ॥ ३१ ॥

मासषट्कं निरुद्योगा निवसन्ति कृषीवलाः ।
अत एव हि संवृद्धिर्दारिद्र्यस्य पदे पदे ॥ ३२ ॥

विधेयं तान्तवं तस्मादल्पलाभमपि ध्रुवम् ।
येन सुष्ठूपयोगः स्यात्कालस्येति जगाद सः ॥ ३३ ॥

कुर्वन्तो नित्यमेवं हि स्वातन्त्र्यं प्राप्स्यथाचिरात् ।
स्वातन्त्र्याद्धि मनुष्याणां प्रियमन्यन्न विद्यते ॥ ३४ ॥

अथ चेत्तान्तवं धर्म्यं न करिष्यथ बान्धवाः ।
बद्धाः परयुगे नित्यं दासभावे निवत्स्यथ ॥ ३५ ॥

जीवन्तोऽपि न जीवन्ति परदास्यधुरन्धराः ।
पारतन्त्र्यमुदाराणां मरणादतिरिच्यते ॥ ३६ ॥

दासभावे स्थितैः कष्टं सोढव्यमतिदुस्सहम् ।
दासोऽश्नाति स्वकं खाद्यं काकशङ्की पदे पदे ॥ ३७ ॥

उत्तिष्ठत ततः शीघ्रं तान्तवे कुरुतोद्यमम् ।
पटकारो जनो येन प्रतिपद्येत तत्फलम् ॥ ३८ ॥

हस्तनिर्मितवासांसि प्राप्स्यत्येवं जनोऽखिलः ।
ततो देशोदयप्राप्तिरिति भूयो न्यवेदयत् ॥ ३९ ॥

# द्वितीयोऽध्यायः

अटता दक्षिणे देशे यत्नेन परिपश्यता ।
निर्जनो निर्जलो ग्रामः प्रतिपन्नो महात्मना ॥ १ ॥

कस्मिंश्चिद्विजने देशे सोऽपश्यत्काञ्चिदन्त्यजाम् ।
जीर्णाम्बरधरां दीनां कर्शिताङ्गीं मलीमसाम् ॥ २ ॥

अमङ्गलां च तां पश्यन्नुद्विग्नोऽभूद्दयाकुलः ।
मालिन्यं ते कुतो भद्र इति पप्रच्छ सादरम् ॥ ३ ॥

अर्धनग्ना च साऽवादील्लज्जानतमुखी मुनिम् ।
दीनानां दुःसहं कष्टं दुर्बोधं तात सुस्थितैः ॥ ४ ॥

दश वर्षाण्यहोरात्रं धृतं वस्त्रमिदं मया ।
जलाभावात्तु तन्नित्यं न शक्नोमि प्रमार्जितुम् ॥ ५ ॥

यदृच्छया जले प्राप्ते वस्त्रस्यार्धं प्रमार्जये ।
शुष्केण वेष्टिता तेन शिष्टमर्धं च धावये ॥ ६ ॥

न शक्यं तज्जलाभावान्मार्जितुं च पुनः पुनः ।
एकवस्त्रा कथं तात विमला स्यामहं बत ॥ ७ ॥

मद्वदर्धपरिच्छन्ना जनानां सन्ति कोटयः ।
एकाहाराश्च कृच्छ्रेण धारयन्त्यो निजानसून् ॥ ८ ॥

अन्त्यजाया वचः श्रुत्वा करुणं करुणामयः ।
अपनीय निजस्कन्धादुत्तरीयं ददौ मुनिः ॥ ९ ॥

अथ तां विस्मितां नारीं कृपालुर्गान्धिरब्रवीत् ।
कुरु भद्रे सदा सूत्रं हितं ते कर्तने ध्रुवम् ॥ १० ॥

ध्यायं ध्यायं दशां दीनां बन्धूनां दुःखितोऽभवत् ।
तदुद्धारमनुध्यायन् विनिद्रोऽगमयन्निशाम् ॥ ११ ॥

यावन्न वेष्टिताः सर्वे बन्धवो मे यथोचितम् ।
स्थास्यामि स्वल्पवेशोऽहमिति तेन धृतं व्रतम् ॥ १२ ॥

नग्नस्कन्धस्ततः पश्चादाजानुपटवेष्टितः ।
जनहासमनादृत्य त्यक्तभोगो जितेन्द्रियः ॥ १३ ॥

नगरान्नगरं गच्छञ्छीतोष्णसमवासितः ।
दुर्दैवं ग्राम्यलोकानां पौरेभ्यः स न्यवेदयत् ॥ १४ ॥

लुप्तधर्मैः किलास्माभिरस्पृश्या इति दूषिताः ।
निष्कासिताश्च संसर्गादन्त्यजा भयकम्पिताः ॥ १५ ॥

अथ चित्रं किमत्र स्याद्यदि बोरादयः परे ।
अस्मानप्यवमन्येरन्नाफ्रिकानन्त्यजानिव ॥ १६ ॥

अधर्मस्य फलं नूनं दत्तं दैवाज्ञया हि नः ।
तस्मादेव वयं जाता धिक्कृता राष्ट्रियान्त्यजाः ॥ १७ ॥

अहो दशा दुरन्तेयं नोपेक्ष्या मानुषात्मभिः ।
बहिष्कारोऽन्त्यजानां हि भारतस्यैव लाञ्छनम् ॥ १८ ॥

शूद्रो वा ब्राह्मणो वापि क्षत्रियो वा कृषीवलः ।
देवदृष्ट्या समाः सर्वे विकृतिस्तु नरोद्भवा ॥ १९ ॥

भेदः कृतो मनुष्येण न धात्रा समदर्शिना ।
शीलं चिह्नं सुजातस्य न जातिर्न च जीविका ॥ २० ॥

अतोऽन्त्यजानवज्ञातुं नाधिकारोऽस्ति कस्यचित् ।
अमी मलिनकर्मार्हा इत्युक्तिर्ननु किल्बिषम् ॥ २१ ॥

अतस्तेषां समुद्धारो धर्मो गुरुतमो हि नः ।
तदेव साधनं सम्यग् देशस्योद्धारसिद्धये ॥ २२ ॥

दुराग्रहमिमं तस्मादुत्सृज्य कृतनिश्चयाः ।
नक्तन्दिवं प्रयस्यामो दीनानां हितकाम्यया ॥ २३ ॥

विद्यालये मठादौ च निषिद्धांस्तानतः परम् ।
निश्शङ्कं स्वीकरिष्यामो निष्कारणबहिष्कृतान् ॥ २४ ॥

इत्युक्त्वा पुनरारेभे वक्तुं कर्षकदुःस्थितिम् ।
अहो पौरा न विज्ञाता युष्माभिः क्षेत्रिणां दशा ॥ २५ ॥

तद्दारिद्र्यमपाकर्तुं तान्तवं ह्येकसाधनम् ।
अतस्तदुद्यमायैव प्रोत्साहं कर्तुमर्हथ ॥ २६ ॥

धनाढ्या वा दरिद्रा वा समाः सर्वे परस्परम् ।
अतः स्वार्थं परित्यज्य वर्तध्वं धर्मतत्पराः ॥ २७ ॥

स्वदेशोदयकामाश्चेत्स्वबान्धवहितेप्सवः ।
तदवगच्छताग्रे नः शोचनीयामधोगतिम् ॥ २८ ॥

पुरा कस्मादयं देशः प्रख्याताभ्युदयः स्थितः ।
दारिद्र्येणाधुना ग्रस्तः कस्माच्चेति विमृश्यताम् ॥ २९ ॥

परदेशीयवस्त्राणां विधातव्या बहिष्कृतिः ।
विदेशवसनासक्तिः स्वदेशोद्यमनाशिनी ॥ ३० ॥

पुराऽऽसन्निह निःसङ्ख्याः पटकारा विशारदाः ।
अंशुकैरुत्तमैर्येषां सम्भृतं निखिलं जगत् ॥ ३१ ॥

इतोऽब्दानां शतात्पूर्वं विच्छिन्ना अधिकारिभिः ।
पटकारकराङ्गुष्ठाः कृतास्ते नष्टजीविकाः ॥ ३२ ॥

ध्वस्तोऽनेन विघातेन देशस्योद्यम उत्तमः ।
पराधीना वयं जाता आङ्ग्लदेशावलम्बिनः ॥ ३३ ॥

अथाङ्ग्लासुरसाम्राज्ये धर्महीने प्रतिष्ठिते ।
शिल्पानां भारतीयानां विनाशोऽभूच्छनैः शनैः ॥ ३४ ॥

पदे पदेऽधिकारो नो विच्छिन्नः परतस्करैः ।
येन व्यक्तित्वहीनाः स्मो हृतपक्षाः खगा इव ॥ ३५ ॥

नपुंसका वयं जाता हृतशस्त्रादिसाधनाः ।
पुंस्त्वापहरणान्नान्यः परं शोच्यो हि विप्लवः ॥ ३६ ॥

सार्धैकशतमब्दानां स्थिता लोकास्तमोवृताः ।
हीना देशाभिमानेन राष्ट्रोन्नतिपराङ्मुखाः ॥ ३७ ॥

विमानिताः स्वदेशे च विदेशे च तिरस्कृताः ।
अधोमुखाश्च दासत्वान्नस्तिताः पशवो यथा ॥ ३८ ॥

भारताभ्युदयायाऽतः कुरुध्वं दृढनिश्चयम् ।
परदेशीयवस्तूनां विदध्वं च बहिष्कृतिम् ॥ ३९ ॥

नैर्बल्यमुपयास्यन्ति बहिष्कारेण चाङ्गलाः ।
तद्व्यापारे च विध्वस्ते स्वातन्त्र्यं नः सुनिश्चितम् ॥ ४० ॥

खादिवस्त्रात्परं वासो नैव धार्यं कदाचन ।
स्वार्थत्यागात्स्वदेशार्थं नान्यच्छ्रेयो हि विद्यते ॥ ४१ ॥

इत्यादिशन् महात्मासौ देशबन्धून् पुरे पुरे ।
प्रोत्साहं हतचेतस्सु लोकेषु समधुक्षयत् ॥ ४२ ॥

कोट्यो नरनारीणामुपदेशं महात्मनः ।
निशम्यापुर्महोत्साहं निष्ठां च देशकर्मसु ॥ ४३ ॥

पौरा मोहतमस्सुप्ता जागरित्वा शनैः शनैः ।
त्यक्तभोगा अजायन्त मुनेस्तस्यानुयायिनः ॥ ४४ ॥

परदेशीयवस्त्राणि निर्दह्य बहवो जनाः ।
श्वेतखादिधराः सन्तः सञ्जाता देशसेवकाः ॥ ४५ ॥

आरब्धं विविधं शिल्पं युवकैर्व्यवसायिभिः ।
गुञ्जनं तन्तुचक्रस्य श्रूयते स्म गृहे गृहे ॥ ४६ ॥

# तृतीयोऽध्यायः

ततो विचारयन् प्रश्नान् बहूनेकाग्रमानसः ।
अहिंसा परमो धर्म इति निर्णयमागतः ॥ १ ॥

हिंसां न कोऽपि कुर्वीत मनोवाक्कायकर्मभिः ।
अहिंसयैव सिद्धिः स्यादित्याह स पुनः पुनः ॥ २ ॥

अथ सन्त्रासिते लोके चम्पारण्याभिधे स्थले ।
आङ्ग्लैः प्रबलोन्मत्तैरुद्भूत्कष्टसञ्चयः ॥ ३ ॥

दुःखग्रस्तस्य लोकस्य साहाय्यार्थं जगाम सः ।
प्रतिस्थलं जितात्मायमहितद्वेषवर्जितः ॥ ४ ॥

वित्रस्तं कर्मकृल्लोकं कुस्वामिभ्यो विमोच्य सः ।
न्यवर्तत निजावासं नीतिशास्त्रविशारदः ॥ ५ ॥

ततो जनपदान् कैरानुपयातो विपद्गतान् ।
स्वबान्धवान् समुत्सृज्य विवशान्मरणोन्मुखान् ॥ ६ ॥

एवं स्थिते कथं दातुं मन्दभाग्याः कृषीवलाः ।
दारिद्र्यरक्षसा ग्रस्ताः शक्नुयुर्भूकरं पणम् ॥ ७ ॥

करादानस्य दारिद्र्यं हेतुरासीन्न चान्यथा ।
राजापि सरसः शुष्कात्पयः पातुं न पारयेत् ॥ ८ ॥

एकवर्षावकाशं ते प्रार्थयन्त कृषीवलाः ।
करुणं करदानाय निर्घृणानधिकारिणः ॥ ९ ॥

तद्याचनां तिरस्कृत्य पाषाणहृदयास्तु ते ।
कराऽदाने हरिष्यामः क्षेत्राणीति व्यतर्जयन् ॥ १० ॥

शोचनीयां कथामेतामाकर्ण्य स दयानिधिः ।
द्रवीभूतश्चिरं तस्थौ ध्यायंस्तन्मुक्तिसाधनम् ॥ ११ ॥

ततोऽधिकारिणो द्रष्टुं महात्माऽभिजगाम सः ।
वाचोयुक्तिभिरर्थ्याभिः प्रयेते च प्रसादने ॥ १२ ॥

स्वयत्ने विफलीभूते सुवादैरपि संयमी ।
अन्यायिनो नृपप्रेष्यान् विरोद्धुं निश्चिकाय सः ॥ १३ ॥

स्वनिश्चयानुरोधेनाऽऽकारयच्च महासभाम् ।
तत्रानेकैरुपन्यासैर्विदधे कार्यनिर्णयान् ॥ १४ ॥

राजभृत्यास्तु दुर्वृत्ताद् व्यरमन्न मनागपि ।
भूयोऽपि कृषिकान् दीनान् बलात्कारैरपीडयन् ॥ १५ ॥

अथ न्याय्यसमाचारो महात्माऽन्वर्थनामकः ।
सत्याग्रहस्य तत्त्वानि व्याचख्यौ ग्रामवासिनाम् ॥ १६ ॥

स्वधर्मं प्रतिपद्यध्वं पुरुषत्वं च रक्षत ।
इत्यब्रवीत्स धर्मात्मा स्वबन्धूनाफ्रिकान् यथा ॥ १७ ॥

राज्याधिकारिणां वर्गे लोकानामहितोद्यते ।
प्रजानामधिकारोऽस्ति बलात्तेषां विरोधने ॥ १८ ॥

एकतश्च स्थितो मानी राजभृत्यो महाबलः ।
अन्यतश्च प्रजावर्गो नतकायो भयार्दितः ॥ १९ ॥

अपमानमिमं सोढुं कथं शक्नुथ बान्धवाः ।
त्यक्त्वाधिकारिणो भीतिमुत्तिष्ठत सपौरुषम् ॥ २० ॥

अहिंसका जितक्रोधाः प्रवर्तध्वं स्वकर्मणि ।
शस्त्रास्त्रबलहीनानां बलं सत्याग्रहः परम् ॥ २१ ॥

भङ्क्तव्यं शासनं दुष्टं प्रदातव्यो न भूकरः ।
सोढव्यः सर्वथा दण्डः सत्याग्रहमुपाश्रितैः ॥ २२ ॥

अद्भुतं फलमेतस्य प्राप्स्यामो नचिराद्ध्रुवम् ।
इति प्रोत्साहयन्नाह स गुर्जरकृपीवलान् ॥ २३ ॥

प्रान्तस्यास्य जनः कृत्स्नः सत्यवीर्यादिभिर्गुणैः ।
अनुचक्रे स्वकान्बन्धून्नाफ्रिकाखण्डवर्तिनः ॥ २४ ॥

हृतगोभूमयश्चापि सत्याग्रहसुनिष्ठिताः ।
ग्राम्यास्तस्थुरनुद्विग्नास्त्यक्तभोगार्थसंपदः ॥ २५ ॥

शासकानां तमश्छन्ने हृदि ज्ञानारुणोदये ।
वर्षान्ते प्राप संसिद्धिं सत्याग्रहमहाव्रतम् ।। २६ ।।

करदानासमर्थेभ्यो देयः संवत्सरोऽवधिः ।
करदानक्षमेभ्यस्तु परिग्राह्यः करो द्रुतम् ।। २७ ।।

यथास्वं हृतवस्तूनि प्रतिदेयानि सत्वरम् ।
इति शासितुराज्ञाऽभूद्यथा लोकैरपेक्षितम् ।। २८ ।।

सर्वतः सफलीभूते गुर्जरेषु महाव्रते ।
हर्षविस्मयसङ्कीर्णं प्रजानामभवन्मनः ।। २९ ।।

ग्रामीणाः कैरदेशस्य धैर्यसत्त्वादिसद्गुणैः ।
मानास्पदमजायन्त भारतस्याखिलस्य च ।। ३० ।।

कीर्तिस्सत्याग्रहस्यापि प्रसृताऽखिलभारते ।
लोकानां मतभेदेऽपि तत्प्रभावः सुमानितः ।। ३१ ।।

# चतुर्थोऽध्यायः

ततस्तीरे सब्रमत्या नाम सत्याग्रहाश्रमम् ।
महात्मा स्थापयामास सदनं सानुयात्रिकः ॥ १ ॥
सत्यमेव प्रमाणं यन्मनोवाक्कायकर्मभिः ।
तस्मिन् पुण्यनिवासे तद्यथार्थो हि स आश्रमः ॥ २ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
स्वदेशवस्तुनिष्ठत्वमभयं रुचिसंयमः ॥ ३ ॥
अन्त्यजानां समुद्धारो नवैतानि व्रतानि हि ।
भारतोत्कर्षसिद्ध्यर्थमाश्रमस्य महात्मनः ॥ ४ ॥
निर्ममो नित्यसत्त्वस्थो मिताशी सुस्मिताननः ।
सुकलत्रः शिशुप्रेमी पितेवाश्रमवासिनाम् ॥ ५ ॥

ध्यायन् क्लेशान् स्वबन्धूनां तद्धितैकपरायणः ।
विराजते मुनिर्बुद्धो बोधिद्रुमतले यथा ॥ ६ ॥

साक्षात्सत्यप्रदीपोऽयं दीप्यतेऽखिलभारते ।
स्वबन्धूनामपाकुर्वन् हृदयान्मोहजं तमः ॥ ७ ॥

बलं सर्वबलेभ्योऽपि सत्यस्यैवातिरिच्यते ।
सत्यवानबलः श्रेयान् सबलात्सत्यवर्जितात् ॥ ८ ॥

तद्ये चरन्ति धर्मेण प्रजा वा राज्यशासकाः ।
समृद्धिर्जायते तेषामन्येषां तु क्षयो ध्रुवः ॥ ९ ॥

इति तत्रभवान् गान्धिराख्याति सहवासिनः ।
अनुयायिजनांश्चान्यान् वचसा लेखतोऽपि च ॥ १० ॥

असङ्ख्यैरद्भुतालोकैः सद्गुणैर्धर्मसञ्चितैः ।
विराजते महात्माऽसौ ताराभिर्गगनं यथा ॥ ११ ॥

महात्मा प्राह —

अधर्ममपि दृष्ट्वा यः प्रतिबन्द्धुं न वाञ्छति ।
सत्ये सत्यपि यो भीत्या न च तत्प्रतिपद्यते ॥ १२ ॥

क्लीबयोरुभयोश्चापि निष्फलं जीवनं तयोः ।
स्वार्थनाशभयाद्यत्तौ रक्षतोऽनृतजीवनम् ॥ १३ ॥

सहिष्णुरप्यघस्याहं सर्वथास्मि निरोधकः ।
सत्यस्य प्रतिपत्तास्मि भयदस्यापि निश्चितम् ॥ १४ ॥

बलात्कारोऽपि साधीयान्न चाध्यात्मिकभीरुता ।
अहिंसा निजपापघ्नी दमनी च द्विपामपि ॥ १५ ॥

अहिंसां पालयेन्मर्त्यो धीरो मृत्युमुखेऽपि सन् ।
यस्य धैर्यमिदं नास्ति स कुर्वीत बलात्कृतिम् ॥ १६ ॥

हिंसामपि समाश्रित्य वरं मृत्युमुखे गतम् ।
न पुनः स्वात्मरक्षार्थं कृतं निन्द्यं पलायनम् ॥ १७ ॥

करोति मनसा हिंसां स हि भीरुः पलायिता ।
आत्मनो मृत्युकातर्यादात्महिंसां करोति च ॥ १८ ॥

अस्य सात्त्विकधर्मस्य समुद्धारविधायकः ।
शनैः शनैर्बलं प्राप्य दुर्निवारो भविष्यति ॥ १९ ॥

अत एव मया दत्तं नाम सत्याग्रहाश्रमः ।
सत्यानुयायियुक्ताया विनीतवसतेर्मम ॥ २० ॥

इति सत्यादिधर्माणाममोघं बलमद्भुतम् ।
वर्णयन् ग्राहयामास व्रतानि सुबहून् गुरुः ॥ २१ ॥

न केनाप्यहमासार्यं करिष्ये चन्द्रवासरे।
सम्भाषणमिति प्राज्ञो मौनव्रतमधारयत् ॥ २२ ॥
अतः प्राप्ते गरिष्ठेऽपि कार्ये तं नैव चिक्लिशुः ॥
तस्य व्रतसमाप्तिं तु प्रतीक्षाञ्चक्रिरेऽनुगाः ॥ २३ ॥
अपराधे कृतेऽप्यन्यैः सत्यसारे तदाश्रमे ।
स्वीकृत्य दोषसर्वस्वमुपवासैस्तपस्यति ॥ २४ ॥
आश्रमाद्बहिरन्यत्र लोकानां कलहेऽपि सः ।
स्वमेव कारणं मत्वा तत्कलङ्केन दूयते ॥ २५ ॥
आत्मवत्सर्वभूतानि पश्यतोऽस्य पदानुगाः ।
गुणैः परवशीभूता व्यवर्धन्त सहस्रशः ॥ २६ ॥
सर्वदाप्याचरिष्यामः सत्यादिनवकं व्रतम् ।
इति जातसमुत्साहैः सधैर्यं निश्चितं जनैः ॥ २७ ॥

# पञ्चमोऽध्यायः

अथोत्थितं महायुद्धं स्वराज्येप्सौ जने स्थिते ।
पाश्चात्याखिलदेशेषु प्रभुत्वबलगृध्नुषु ॥ १ ॥

जगतः सुव्यवस्थार्थं निर्णेतुं च स्वतां स्वतः ।
संप्रवृत्तमिदं युद्धमिति ख्यापितमाङ्गलैः ॥ २ ॥

यूयं प्राप्स्यथ युद्धान्ते स्वातन्त्र्यं चिरमीप्सितम् ।
साहाय्यं कुरुतास्माकमित्यासीद्राजवाचिकम् ॥ ३ ॥

अथाङ्ग्लच्छलनिःशङ्को देशकल्याणतत्परः ।
आङ्ग्लान् सेवितुमारेभे सपक्षान्नीतिकोविदः ॥ ४ ॥

क्षतलोकस्य सेवार्थं तेन सङ्घो विनिर्मितः ।
युध्यध्वमाङ्ग्लराष्ट्रार्थं बान्धवा इति चाब्रवीत् ॥ ५ ॥

साम्राज्यस्योपकारे हि भारतस्य हितं स्थितम् ।
इति मत्वागमद्गान्धिर्देहल्यां युद्धसंसदम् ॥ ६ ॥

स्वार्थलाभमथ त्यक्त्वा सेवका देशवत्सलाः ।
व्यसृजन् परसंग्रामे निजप्राणान् सहस्रशः ॥ ७ ॥

समाप्ते तु महायुद्धे प्रजामर्दनदुस्सहम् ।
देशे दास्यमगाद् वृद्धिं स्वातन्त्र्यस्य तु का कथा ॥ ८ ॥

गान्धिश्चक्रे शठैराङ्ग्लैर्भारतं प्रेक्ष्य वञ्चितम् ।
सत्याग्रहसमारम्भमाफ्रिकायां पुरा यथा ॥ ९ ॥

विरम्यतां निजोद्योगादिति लोकान्निबोध्य च ।
तपोभिर्लङ्घनैर्ध्यानैरहिंसाव्रतमाचरत् ॥ १० ॥

यथावत्प्रस्तुते युद्धे वलात्कारविवर्जिते ।
देहल्यां वणिजां सत्याग्रहिणां च रणोऽभवत् ॥ ११ ॥

वणिक्पथेषु लोकेषु मिलितेषु कुतूहलात् ।
आग्नेयास्त्राण्यसृज्यन्त राजभृत्यैर्यदृच्छया ॥ १२ ॥

प्रोत्साहयितुमुद्विग्नानहिंसाया दृढव्रते ।
सेवितुं च क्षतान् गान्धिर्देहलीमगमद्द्रुतम् ॥ १३ ॥

निरुद्धे शासकादेशादर्धमार्गे महात्मनि ।
उत्थितस्तीव्रसंरम्भो धृतसत्यव्रतेष्वपि ॥ १४ ॥

प्रव्राजितौ समे काले भारतादेशनायकौ ।
किचल्यूसत्यपालाख्यावमृतसरनिवासिनौ ॥ १५ ॥

याचमानस्तयोर्मुक्तिं राजप्रतिनिधिं ततः ।
ताडितो जनसंमर्दो रक्षकैः कारणं विना ॥ १६ ॥

रक्षिणामपचारेण क्रोधान्धा जनताऽभवत् ।
आङ्ग्लान् पञ्च निहत्याथ राजहर्म्याण्यनाशयत् ॥ १७ ॥

आङ्गली प्रमदा काचित्क्रुद्धलोकैः प्रताडिता ।
रक्षिता त्वितरैः कैश्चिन्नीताऽभून्निर्भयं स्थलम् ॥ १८ ॥

ततो दिनद्वयादाङ्ग्लो डायरो नाम दुर्नरः ।
महासेनामधिष्ठाय सेनानीर्द्रुतमागमत् ॥ १९ ॥

तत्र चोपस्थिते तस्मिञ्जनवृन्दमपासरत् ।
गृहीताश्च जनाः केचित्पुनः शान्तिः प्रतिष्ठिता ॥ २० ॥

पौराण्डिण्डिमघोषेण समाहूय दुरात्मकः ।
जनयात्राः सभाश्चापि निषेधामीत्यगर्जयत् ॥ २१ ॥

विना मेऽनुज्ञया कोऽपि न गच्छेन्नगराद्बहिः ।
इति च ख्यापयामास नररूपी स राक्षसः ॥ २२ ॥

कृतेऽपि घोषणे तस्मिन्नयुतं तीर्थसेविनः ।
पुरेऽमृतसरे धर्मोत्सवाय मिलितास्तदा ॥ २३ ॥

जाल्यन्वालाख्य उद्याने प्राकारेणावृते किल ।
तत्र तेषूपविष्टेषु गुलिकावृष्टिरापतत् ॥ २४ ॥

आग्नेयसंनिपातोऽयं प्रावर्तत चमूपतेः ।
घोराज्ञया नृशंसस्य विना पूर्वप्रबोधनम् ॥ २५ ॥

बन्दीकृताः स्थले तस्मिन् यात्रिकास्ते भयार्दिताः ।
परस्परं निपीड्योच्चैरक्रन्दन् भयविह्वलाः ॥ २६ ॥

निर्दोषोऽयं जनस्तोम इति ज्ञात्वापि निश्चितम् ।
नैव स्वकर्मणो घोराद् व्यरमत्स पिशाचकः ॥ २७ ॥

यत्र गाढो जनौघोऽभूत्तत्रैवास्कन्दमाचरत् ।
इमे लोकाः शरव्यं मे प्रशस्तामिति कत्थनः ॥ २८ ॥

शासता तेन सेनान्या दत्ताऽऽज्ञेति भयङ्करी ।
यत्राक्रान्ताऽऽङ्गली तत्र सर्पेयुरुरसा जनाः ॥ २९ ॥

यः कोऽपि दैवसंयोगाद् घोराज्ञां तामलङ्घयत् ।
हा कष्टं मन्दभाग्योऽसौ ताडितो निर्दयं बत ॥ ३० ॥

अध्यापकाश्च शिष्याश्च समाहूता दिने दिने ।
अतिदूरनिवासेभ्यस्तत्क्लेशानामनादरात् ॥ ३१ ॥

अथाज्ञामनु संप्राप्ता गुरुशिष्याः सहस्रशः ।
पैशाचवृत्तिना तेन राजमार्गे प्रताडिताः ॥ ३२ ॥

दारुणानामसंख्यानां पापानां दारुणं फलम् ।
परत्र लप्स्यते दुष्टः काऽत्र शङ्का भवेन्नु ॥ ३३ ॥

घोरकृत्ये कृतेऽप्यस्मिण्डायरेण दुरात्मना ।
साम्राज्याधिकृता नैनं दोषास्पदमजीगणन् ॥ ३४ ॥

प्रत्युतायमभूदाङ्ग्लै राजगृह्यैः सुमानितः ।
सज्जनैस्त्वाङ्ग्लदेशेऽपि निन्दितश्च तिरस्कृतः ॥ ३५ ॥

अयोग्यो ह्यधिकारेण योजितश्चेन्नराधमः ।
नाशं करोति सर्वत्र शस्त्रपाणिः कपिर्यथा ॥ ३६ ॥

तेनापूर्वप्रसङ्गेन गान्धिर्भूत्वातिदुःखितः ।
कीर्तिमुद्रां नृपाल्लब्धां प्रत्यार्पयत निर्भयम् ॥ ३७ ॥

रवीन्द्रनाथपूर्वा ये मानिताश्चक्रवर्तिना ।
तेऽपि सम्मानमुद्राणां परित्यागमकुर्वत ॥ ३८ ॥

राष्ट्रसंसदि वार्षिक्यां निर्णया विविधाः कृताः ।
महात्मनोऽनुमोदेन नेहरूलजपतादिभिः ॥ ३९ ॥

आङ्ग्लवस्तुबहिष्कारः प्रत्याख्यानं करस्य च ।
धिक्कारो राजभृत्यानां धृतमेतद्व्रतत्रयम् ॥ ४० ॥

## षष्ठोऽध्यायः ।

सान्त्वनार्थं ततोऽस्माकं युवराज इहागतः ।
भारतीयास्तु दुःखार्ता औदासीन्येन गुण्ठिताः ॥ १ ॥
मुम्बापुरीं नरेशस्य कुमारे समुपागते ।
सर्वे पौरजनास्तस्थुर्निजोद्यमपराङ्मुखाः ॥ २ ॥
प्रविष्टे नगरं तस्मिन् सार्वभौमकुमारके ।
रथ्याः शून्या अवर्तन्त संवृतानि गृहाणि च ॥ ३ ॥
दुष्कर्मनिरतेष्वेवमयोग्येष्वधिकारिषु ।
राजा वा राजपुत्रो वा पुरा प्रियतमोऽपि सन् ॥ ४ ॥
दृष्ट्या दुःखार्तलोकानां प्रतिभात्यतिगर्हितः ।
अत एव द्वीपीवासी जातास्तत्र पराङ्मुखाः ॥ ५ ॥

पारसीका नृपासक्ता आङ्ग्लेया जनास्तथा ।
स्वागतं राजपुत्राय व्याजह्रुः स्वार्थतत्पराः ॥ ६ ॥

भारतं शासितुं शक्यं धर्मेणैव हि केवलम् ।
न स्वार्थलोलुपत्वेन न च निर्घृणभावतः ॥ ७ ॥

भिन्नप्रकृतिभिर्लोकैर्विदेशे बलमिच्छुभिः ।
ज्ञेया जनमनोवृत्तिः प्रमाणं हि प्रजाहितम् ॥ ८ ॥

अज्ञानाद्भवति द्वैधं द्वैधाद्भवति शत्रुता ।
शत्रुत्वाद्विप्लवो भावी ततो नाशः प्रशासितुः ॥ ९ ॥

मत्ताः स्वार्थप्रधानाश्च वाणिजा आङ्गला इमे ।
संस्कृतिं भारतस्यास्य प्राक्तनीं ज्ञातुमक्षमाः ॥ १० ॥

पुरा भारतवर्षेऽस्मिन् सर्वविद्याकलाश्रये ।
प्रख्याताभ्युदये राजत्याङ्ग्ला अज्ञा इव स्थिताः ॥ ११ ॥

क्व नः प्राचीन उत्कर्षो वेदशास्त्रादिभूषितः ।
क्व तत्कालदशाऽऽङ्ग्लानां मृगचर्मैकवाससाम् ॥ १२ ॥

स्वभावजं क्व सौजन्यं भारतस्य हि सात्त्विकम् ।
क्वाऽऽङ्गलानां नु पारुष्यमविश्वासोऽसहिष्णुता ॥ १३ ॥

जनौ कथमिमौ भिन्नौ स्वभावाच्छिक्षया तथा ।
विनानुरागबन्धेन भवेतां सहवर्तिनौ ॥ १४ ॥

धर्मकञ्चुकिनां हन्त परद्रव्यापहारिणाम् ।
भारतीयाः स्वमौर्ख्येण द्विषामामिषतां ययुः ॥ १५ ॥

उच्चावचेषु लोकेषु कष्टं संजायते सदा ।
मतान्तरासहिष्णुत्वाद् धर्मद्वेषस्य चोद्भवात् ॥ १६ ॥

हिन्दूमुसलमानानां वैरित्वं नाशकारि नः ।
पारसीकैश्च विद्वेषो देशोत्कर्षस्य का कथा ॥ १७ ॥

उक्तपूर्वो हि सम्मानो राजपुत्रे प्रदर्शितः ।
आङ्ग्लैः पारसीकैश्च कुतोऽपि स्वार्थकारणात् ॥ १८ ॥

अथोद्विग्नाश्च संक्रुद्धा भारतस्येतरे जनाः ।
हिन्दूमुसलमीनाश्च पारसीकैरयुत्सत ॥ १९ ॥

अनादृतस्वदेशास्ते पारसीकास्तिरस्कृताः ।
जातिभ्यामितराभ्यां च ताडिताः पशवो यथा ॥ २० ॥

दुष्कर्मणा स्वबन्धूनां महात्माभूद्विलज्जितः ।
नृशंसा डायरप्रख्या इमे हन्तेत्यदूयत ॥ २१ ॥

शान्त्या साधयितुं राज्यमयोग्या मम बान्धवाः ।
इति तत्पापशुद्ध्यर्थं स्वयं लङ्घनमाचरत् ॥ २२ ॥

# सप्तमोऽध्यायः ।

अथो दिनेषु गच्छत्सु घोरः कलिरुपस्थितः ।
मलबारविभागेषु मोपलाहिन्दुलोकयोः ॥ १ ॥

चतुर्वर्षं हि तज्जन्यमचलन्मूढवृत्तयोः ।
यत्र नाशं गता व्यर्थं नराः पञ्चशतोत्तराः ॥ २ ॥

यथा यथा प्रजामध्ये जायते भिन्नधर्मतः ।
द्वेषस्तथा तथोत्कर्षो देशस्य परिहीयते ॥ ३ ॥

पारतन्त्र्याभिभूतस्य देशस्याभ्युदयः कुतः ।
अतः स्वातन्त्र्यमाप्तव्यमैक्यं स्वातन्त्र्यसाधनम् ॥ ४ ॥

अविरोधः परं शस्त्रं परतन्त्रीकृतात्मनाम् ।
तदभावे महाँल्लाभो लुब्धस्येव हि शासितुः ॥ ५ ॥

अज्ञानमूलमुत्सृज्य परस्परविरोधनम् ।
युयुत्सून् योजयेद्बन्धून् विनीतो देशसेवकः ॥ ६ ॥

अथाल्पेनैव कालेन चौरिचौराभिधे स्थले ।
महत्सङ्कटमुद्भूतं सत्याग्रहविदूषकम् ॥ ७ ॥

सभायां प्रतिरुद्धायां राज्यतन्त्राधिकारिभिः ।
धृष्टैः कैश्चिददह्यन्त सजीवा राजरक्षिणः ॥ ८ ॥

अयशस्यमिदं कर्म प्रतिकर्तुं प्रशासकाः ।
उपलक्षद्वयं नृणां चिक्षिपुर्बन्धनालये ॥ ९ ॥

अनुष्ठितेऽथ कृत्येऽस्मिन् हाहाकारः समुत्थितः ।
निशम्य तं महात्मासौ विषादं परमं गतः ॥ १० ॥

धृतव्रतोऽपि कालज्ञः प्रमाथश्चाप्रमाथिता ।
यथायोग्यं नु सञ्चार्यावित्यपि व्यमृशत्स्वयम् ॥ ११ ॥

स्वदेश्या भीरुका नेति विप्लवोऽयमसाधयत् ।
प्रमाथं शक्नुयुः कर्तुमिति गान्धिरमन्यत ॥ १२ ॥

परतन्त्रैर्बलात्कारात्सिद्धिः खलु न लभ्यते ।
शान्तियुक्तो वरं ध्वंसो न जयोऽपि प्रमाथजः ॥ १३ ॥

एवं जानन्नपि प्राज्ञोऽबोधयद्राष्ट्रियाञ्जनान् ।
प्रयोगोऽसहकारस्य त्यज्यतामिति सर्वतः ॥ १४ ॥

निषेधनमिदं श्रुत्वा विस्मितास्ते बभाषिरे ।
परिवर्तननाशोऽस्मादहो नूनं भविष्यति ॥ १५ ॥

तत उग्रे समारब्धे परिवर्तनकर्मणि ।
नतशीर्षाः पुरा लोकाः सद्य एवोन्मुखा बभुः ॥ १६ ॥

उद्धता येऽभवन्नाङ्ग्लास्ते नम्रत्वमुपागताः ।
मानुष्यं भारतीयानामङ्गीचक्रुस्ततः परम् ॥ १७ ॥

ये पुरा तमसाक्रान्ता देशभक्तिविवर्जिताः ।
जडा दास्यैकनिष्णाता नानाधर्मविभाजिताः ॥ १८ ॥

अलसा मूढविश्वासाः प्राप्य तेऽद्य प्रबोधनम् ।
गता अद्भुतमेकत्वमित्याङ्ग्लैरवलोकितम् ॥ १९ ॥

अद्य यावन्मदोन्मत्ता आङ्गला मृदवोऽभवन् ।
तिरस्कृतांश्च देशीयान्नाचीकमन्त वेदितुम् ॥ २० ॥

अन्यदेव हि संजातं भारतं परिवर्तनात् ।
दासभावं मुमुक्षुभ्यस्त्रासमाङ्ग्लाः प्रपेदिरे ॥ २१ ॥

भाषणस्य कृते गान्धी राजद्रोहीति निश्चितः ।
आत्मसंयमयुक्तोऽपि कारागारे प्रवेशितः ॥ २२ ॥

अश्रद्धेयोऽपि नेतृणां ग्राम्याणां स प्रियोऽभवत् ।
कृष्णस्यैवावतारोऽयमिति तैश्च सुपूजितः ॥ २३ ॥

समदुःखसुखः शान्तः सिद्धार्थ इव मानितः ।
निन्ये वर्षद्वयं कुर्वन् कर्तनं बन्धनालये ॥ २४ ॥

अथ भिन्नमतैः कैश्चिन्नायकैर्नेहरूमुखैः ।
स्वराज्यपक्ष इत्याख्यः सङ्घ एको विनिर्मितः ॥ २५ ॥

वयं लप्स्यामहे राज्यं यथान्यायं च धर्मतः ।
तत्सिद्ध्यै नेतरोपाय इति तैर्निश्चितं जनैः ॥ २६ ॥

विमुक्ताय द्विवर्षान्ते व्याधिहेतोर्महात्मने ।
मालवीयादिभिर्मुख्यैर्निश्चयोऽयं निवेदितः ॥ २७ ॥

तस्मिन्नये विरुद्धेऽपि निजाभिमततत्त्वतः ।
स्वराज्यनयवादिभ्यो गान्धिः स्वानुमतिं ददौ ॥ २८ ॥

शस्त्रोपचारानिस्सत्त्वो विषण्णः कार्यनाशतः ।
न्यवर्तताश्रमं शान्तं महात्मा विगतस्पृहः ॥ २९ ॥

# अष्टमोऽध्यायः ।

त्यक्तराष्ट्रीयकार्योऽपि स्वदेशोदयलालसः ।
स्थितः कुर्वन्निजं धर्मं मुनिर्वर्षचतुष्टयम् ॥ १ ॥

लोकाज्ञानं निराकर्तुं सुग्रन्थास्तेन मुद्रिताः ।
ख्यापितानि स्वतत्त्वानि वृत्तपत्रमुखेण च ॥ २ ॥

लौकिका बहवस्तेन लोकोद्धारचिकीर्षया ।
ब्रह्मचर्यादयो धर्मा उपदिष्टाः पृथक् पृथक् ॥ ३ ॥

दीनानामेव कल्याणं परमं ध्यायता सदा ।
महात्मना दिवारात्रं कृतस्तेभ्यः परिश्रमः ॥ ४ ॥

अन्याय्या नियमा हन्त शासकैर्बहवः कृताः ।
न तु केनापि ते मान्या इत्यादिक्षन्त नायकाः ॥ ५ ॥

राज्ये न्याया विधीयन्ते सुव्यवस्थां हि रक्षितुम् ।
सुखार्थमेव लोकानां न तान् पीडयितुं वृथा ॥ ६ ॥

नियमाश्चेत्प्रणीयन्ते बलाज्जनविमर्दकाः ।
लोकानामधिकारोऽस्ति प्रभङ्क्तुं तान् हि निर्भयम् ॥ ७ ॥

अधर्म्या यदि सह्यन्ते नियमाः सुचिरं जनैः ।
तदा विवर्धते तेजः शासितुः स्वार्थकारिणः ॥ ८ ॥

सहमानाश्चिरं त्रासं भारं धुर्या वृषा इव ।
प्रत्यहं दुर्बला भूत्वा ध्रुवं प्राप्स्यन्त्यधोगतिम् ॥ ९ ॥

हितार्थमेव लोकस्य व्यवस्यति मुनौ सदा ।
ज्वलत्क्लेशाग्निकुण्डे हि त्रिंशत्कोटिजनाः स्थिताः ॥ १० ॥

अथाङ्ग्लेयसमायुक्तः सङ्घो भारतमागतः ।
राजनीतिप्रवीणेन सैमनेन स्वधिष्ठितः ॥ ११ ॥

सभासदस्त्रिवर्गेभ्यो वृताः सचिवमण्डलात् ।
उदारोद्यमिनोर्द्वौ द्वौ स्थितिपालस्य च त्रयः ॥ १२ ॥

सञ्जातो दासभावो नः सदोपादाङ्ग्लशासनात् ।
पुरा ते निर्णयन्तीति प्रतीक्षाञ्चक्रिरे जनाः ॥ १३ ॥

नैकोऽपि भारतीयोऽस्य सङ्घस्य सभिकः कृतः ।
किमतश्चित्रमाङ्ग्लाश्चेदस्मत्क्लेशपराङ्मुखाः ॥ १४ ॥

सैमनीयस्य सङ्घस्य जिज्ञासोर्भारतस्थितिम् ।
बहिष्कारः कृतो लोकैर्निश्चितं नायकैर्यथा ॥ १५ ॥

सैमनप्रमुखे सङ्घे मुम्बानगरमागते ।
श्मशानमिव साक्षात्तत् कृष्णध्वजमयं बभौ ॥ १६ ॥

बद्धवातायनद्वारां निवृत्तनिखिलोद्यमाम् ।
पुरीं शून्यामपश्यंस्ते दग्धां पाम्पेपुरीमिव ॥ १७ ॥

लोकसान्त्वनकामेन सैमनेन निमन्त्रिताः ।
देश्याः केचिद्विनिर्मातुं कार्यसम्पादिकां सभाम् ॥ १८ ॥

आमन्त्रणमिदं कैश्चिदल्पैरेवोररीकृतम् ।
इतरे तु विदूरस्था अतिष्ठन्निरपेक्षकाः ॥ १९ ॥

बाह्यतः केवलं कृत्वा भारतस्यावलोकनम् ।
परमार्थमविज्ञाय स्वदेशं समितिर्ययौ ॥ २० ॥

पुनः सप्तर्षयस्तेऽमी स्वदेशप्रियकाङ्क्षिणः ।
वृथैव भारतं देशमचिरेण समागताः ॥ २१ ॥

रक्षितं चाङ्ग्लराज्येन स्वतन्त्रं भारतं भवेत् ।
इतीष्टमाङ्ग्लैः कैश्चिदुदारैः समदृष्टिभिः ॥ २२ ॥

आङ्ग्लदेशहितायैव प्रेषिताः पुरुषा इमे ।
ग्रसितुं भारतं वर्षं नापनेतुं तदापदः ॥ २३ ॥

कस्त्यजेन्मानुषोऽपूर्वं स्वेच्छया परमं निधिम् ।
अनायासेन सम्प्राप्तं प्रतिष्ठोत्कर्षकारणम् ॥ २४ ॥

स्वदेशमथ निर्याते तस्मिन्सैमनसप्तके ।
अतृप्तिर्भारते वृद्धा द्वयोः प्रीतेस्तु का कथा ॥ २५ ॥

सैमनाद्या अतस्तेऽपि चक्रगोष्ठ्या निराकृताः ।
भारतीयाङ्ग्लयुक्ताया आङ्ग्लसाम्राज्यमन्त्रिभिः ॥ २६ ॥

# नवमोऽध्यायः

अत्रान्तरे महासङ्घो राष्ट्रियो मिलितोऽभवत् ।
कलकत्तापुरेऽसङ्ख्यनरनारीसमाकुलः ॥ १ ॥
राजप्रतिनिधेर्यत्र वाचिता पत्रिकोच्चकैः ।
स्वराज्यमाचिराद्यूयं प्राप्स्यथेति प्रसान्त्वनी ॥ २ ॥
एकादशाब्दतः पूर्वं मान्तेगूवाक्यभङ्गतः ।
वञ्चिता आर्विणे पत्रे राष्ट्रिया न विशश्वसुः ॥ ३ ॥
निस्सारं वचनं तस्य विनिश्चित्य महाजनैः ।
पत्रं प्रत्यर्पितं तस्मै पुनर्वञ्चनभीरुभिः ॥ ४ ॥
एकसंवत्सरात्पूर्वं भारतं प्राप्नुयात्पदम् ।
कानडाप्रमुखैर्देशैः सदृशं निजशासने ॥ ५ ॥

जन्मसिद्धाधिकारं चेद्भारतीया न लम्भिताः ।
यतिष्यतेऽखिलो देशः पूर्णस्वातन्त्र्यसिद्धये ॥ ६ ॥

इति सन्देशवाक्यं ते प्राहिण्वन्नार्विणप्रभोः ।
देहलीनगरस्थस्य राष्ट्रीयाः सङ्घनायकाः ॥ ७ ॥

प्रतिज्ञा च कृता मुख्यैः स्वराज्यस्याभिकाङ्क्षिभिः ।
सज्जीकर्तुं जनान् सर्वान् धर्मयुद्धाय भाविने ॥ ८ ॥

निश्चित्यैवं पुरोगास्ते स्वाधिकारमभीप्सवः ।
मनोरथस्य संसिद्धिमेकाब्दं प्रत्यपालयन् ॥ ९ ॥

चक्रगोष्ठ्यां वयं सर्वां भारतस्य परिस्थितिम् ।
निर्णेष्यामो यथायोग्यमित्याह प्रभुरार्विणः ॥ १० ॥

आपातदर्शिनो मुग्धा याथातथ्यमवेदिनः ।
कथमाङ्ग्लाः प्रवर्तेरन् न्यायतो दुःखितान् प्रति ॥ ११ ॥

चक्रगोष्ठी भवेद्व्यर्था सैमनीयसभा यथा ।
इति मुख्या दृढं जज्ञुर्वञ्च्यमानाः पुनः पुनः ॥ १२ ॥

*खवह्निग्रहचन्द्राब्दे मिलिता प्रथमेऽह्नि ।
अन्तिमं निर्णयं कर्तुं लवपुर्यां महासभा ॥ १३ ॥

---

*अत्र खवह्निग्रहचन्द्रेतिपदैः सङ्ख्या गृह्यते । तद्यथा-खमाकाशमेकं वह्नयो दक्षिणाग्निर्गार्हपत्याहवनीयास्त्रयः । ग्रहा रव्यादयो नव चन्द्रश्चैक इति । अङ्कानां वामतो गतिरिति सङ्केतमनुसृत्य त्रिंशदुत्तरनवशताधिक-सहस्रसङ्ख्या विवक्षिता भवति ।

प्रेरयन्तो जनान् सर्वाञ्छासनानां व्यतिक्रमे ।
स्वयं च तानि भङ्क्ष्यामो नायकैरिति निश्चितम् ॥ १४ ॥

तथापि शान्तिवात्सल्यान्महात्मा नीतिकोविदः ।
आङ्ग्लराज्येन सन्धातुं चकारोचितलेखनम् ॥ १५ ॥

प्रार्थयामास पत्रेऽसौ दुष्टशासननिर्हृतिम् ।
मोचनं च स्वबन्धूनां दारिद्र्यव्याधिविप्लवात् ॥ १६ ॥

लवणस्य करो निन्द्यो दीनलोकविघातुकः ।
निष्कास्य इत्ययाचिष्ट राजप्रतिनिधिं मुनिः ॥ १७ ॥

एकादशपदैर्गान्धिर्दासभावस्य कारणम् ।
दारिद्र्यस्य च देशस्य व्याचचक्षे यथार्थतः ॥ १८ ॥

# दशमोऽध्यायः

## गान्धिपत्रम्

महासैन्यनिवेशार्थमाङ्ग्लैर्भारतशासकैः ।
कृतादतिव्ययाज्जाता निर्धनाः कोटिशः प्रजाः ॥ १ ॥

महान्ति सैन्यवृन्दानि ग्रसन्ते देशसम्पदम् ।
अतः कार्यश्चमूह्रासः शासकार्थक्षतावपि ॥ २ ॥

येन देशस्य सम्पत्तेः प्रजानां शिक्षणादिषु ।
सुकर्मसु भवान् कुर्याद्विनियोगं यशस्करम् ॥ ३ ॥

लवणं नाम दैवेन दत्तं नृणां यथानिलः ।
अधर्म्यो लवणस्यायं करस्तस्मान्निरस्यताम् ॥ ४ ॥

वर्षे वर्षे भवत्येव भूकरोऽप्यधिकाधिकः ।
कुर्वाणो निर्धनाँल्लोकान् परतन्त्रांश्च कर्षकान् ॥ ५ ॥

अपसारय दुःखानि लोकानां त्वरितं सखे ।
किं हि कार्यं प्रभुत्वेन विमुखेन प्रजाहितात् ॥ ६ ॥

लोकस्य नाशकं मद्यं फलकार्यपि शासितुः ।
अतः स्वार्थं परित्यज्य सात्त्विकीं बुद्धिमाश्रितः ॥ ७ ॥

निरुन्द्धि विक्रयं तस्य स्वात्मघातुकवस्तुनः ।
स्वामिनः परमो धर्मः प्रजानां हितकारिता ॥ ८ ॥

स्वदेशस्य हितार्थाय निश्चितः कोशमन्त्रिणा ।
आङ्ग्लनाणकनैमेयो रूप्यमूल्यविवर्धकः ॥ ९ ॥

क्षेत्रभाजां धनाढ्यानामयि लाभकरोऽपि सः ।
बहिर्विक्रयिणां नाशं कर्षकाणां करिष्यति ॥ १० ॥

स्वराज्येन शमं नीते विकारे परशासितुः ।
सुव्यवस्था हि देशस्य स्वयमेव भविष्यति ॥ ११ ॥

देशप्रयोजनव्याजैर्ऋणं भूरि प्रकल्पितम् ।
आरोपितश्च तद्भारो भारतोपरि दुर्वहः ॥ १२ ॥

वृत्तपत्रमुखेणापि तदन्याय्यं प्रकाशितम् ।
उपैक्षि तु तदार्येण यथान्ये क्लेशसञ्चयाः ॥ १३ ॥

अधिकारोऽस्ति लोकस्य मुक्तस्य परनिग्रहात् ।
सूक्ष्मदृष्ट्या विनिश्चेतुमृणारोपस्य धर्म्यताम् ॥ १४ ॥

यद्यधर्म्यं तमारोपं वदेयुः समदर्शिनः ।
तदा तत्प्रकटीकर्तुं प्रजा अर्हन्ति निर्भयाः ॥ १५ ॥

अतः कृताञ्जलिर्याचे सावधानमिमाः सखे ।
चिन्तयेः समदृष्ट्या त्वं देशस्योक्ता मयापदः ॥ १६ ॥

निरङ्कुशाः प्रवर्तन्ते यस्मिन् राज्येऽधिकारिणः ।
शासनं तद्वरं नष्टं प्रजाहितविवर्जितम् ॥ १७ ॥

अतः कार्यं हि राज्यस्य समग्रपरिवर्तनम् ।
जनक्लेशानपाकर्तुमुपायोऽन्यो न विद्यते ॥ १८ ॥

स्वदेशस्य विमोक्षार्थं प्राणैरपि धनैरपि ।
बान्धवा मे करिष्यन्ति प्रयासं प्रबलं ध्रुवम् ॥ १९ ॥

निर्णयश्चक्रगोष्ठ्यास्तु न प्रमाणं भविष्यति ।
पाशवात्मिकशक्त्योर्हि कुतो वादेन निर्णयः ॥ २० ॥

स्वार्थैकतत्परत्वेन क्रियते यदि निर्णयः ।
यद्याङ्ग्लाश्च प्रवर्तेरन् स्वव्यापारैकवृद्धये ॥ २१ ॥

भारतं दुर्बलत्वेऽपि सञ्चेष्यत्युचितं बलम् ।
पराद्रक्षितुमात्मानं मृत्योरालिङ्गनादिव ॥ २२ ॥

देशसेवाप्रवृत्तानां यूनां साहसिनां गणः ।
अतिप्रसभवृत्तीनां वर्धते हि दिने दिने ॥ २३ ॥

सङ्घोऽयं मूककोटीनामसमर्थोऽपि रक्षणे ।
शासितुः सर्वदा मन्ये भवत्येव भयङ्करः ॥ २४ ॥

दुर्बला ननु गण्यन्ते शान्तिमार्गावलम्बिनः ।
परं सत्याग्रहाद्बिद्धि नास्ति तीव्रतरं बलम् ॥ २५ ॥

अतो वस्तद्बलेनैव विरोद्धु निश्चितं मया ।
आङ्गलीयं हठात्कारं प्रतिरोत्स्यामि तेन च ॥ २६ ॥

तदमोघबलं जानञ्छ्रद्धया च समन्वितः ।
यदि स्यां विमुखः कार्ये भविष्याम्यतिनिन्दितः ॥ २७ ॥

सत्याग्रहेण बद्धोऽहं भङ्क्ष्यामि नृपशासनम् ।
घोषयिष्ये च सर्वत्र व्रतस्यास्याद्भुतं बलम् ॥ २८ ॥

शान्तिसत्त्वप्रधानोऽपि मार्गोऽयं विषमः परम् ।
न सत्यस्य जयः प्रायः क्लेशाद्घोरतमादृते ॥ २९ ॥

उद्घोष्यते च सद्भावो मया प्रस्तुतकर्मणः ।
यतिष्ये तद्बलेनैव भेत्तुमाङ्ग्लदुराग्रहम् ॥ ३० ॥

सदुपायेन तेनाहमहिंसैकावलम्बनः ।
जगते दर्शयिष्यामि दुर्नयानाङ्ग्लशासितुः ॥ ३१ ॥

एकलक्ष्योऽथ चेल्लोकश्चरेद्धिंसाविवर्जितः ।
क्लेशैरार्द्रीभविष्यन्ति पाषाणहृदयान्यपि ॥ ३२ ॥

अहिंसाव्रतबद्धोऽहं राजशासनभङ्गतः ।
भवन्तं निरुत्सामि दुर्नयांश्च प्रकाशये ॥ ३३ ॥

अधर्मेष्वपनीतेषु भारतस्य भविष्यति ।
आङ्ग्लैः सुगमो मार्गो विधातुं मित्रतां पुनः ॥ ३४ ॥

वाणिज्यमेव हेतुश्चेदाङ्ग्लानां वसतेरिह ।
भारतस्य स्वतन्त्रत्वे कुतस्तेषां विरोधिता ॥ ३५

अतः शासनमन्याय्यं निष्कासयितुमर्हसि ।
विधातुं च सतामेकां संसदं भूरिचेतसाम् ॥ ३६ ॥

जात्यादिग्रहमुक्तानां जगत्कल्याणकाङ्क्षिणाम् ।
येनाङ्ग्लभारतीयानां मैत्री स्थाप्येत शाश्वती ॥ ३७ ॥

पत्रमेतदनादृत्य यदि स्थास्यसि निर्दयः ।
अधर्मस्य फलं घोरं प्रतीक्षेथा ध्रुवं ततः ॥ ३८ ॥

एकादशे दिने चाहं मासस्यास्य सुनिश्चितः ।
राजशासनभङ्गाय प्रस्थास्ये सानुयात्रिकः ॥ ३९ ॥

अधर्म्येषु विधानेषु पापिष्ठो लावणो नयः ।
तस्य भङ्गमतः पूर्वं करिष्येऽहं सहानुगैः ॥ ४० ॥

अन्याय्याल्लोकदृष्ट्यास्मान्नियमाद्दीनघातुकात् ।
यतिष्ये रक्षितुं दीनान् हृतजीवनसंश्रयान् ॥ ४१ ॥

दुष्टशासनमस्माभिः कथं सोढमियच्चिरम् ।
इति विस्मयते लोको दास्यभारनतः परम् ॥ ४२ ॥

सज्जोऽस्मि विफलीकर्तुमधिकारं प्रशासितुः ।
निरुद्धे मयि सन्त्यन्ये कार्यदक्षाः सहस्रशः ॥ ४३ ॥

सत्याग्रहप्रशान्तात्मा देशभक्तिप्रचोदितः ।
अधुना भारते लोकः सञ्जातो दण्डनिर्भयः ॥ ४४ ॥

संवादं कर्तुकामश्चेन्मया सह सविस्तरम् ।
देहल्यां भवतः शीघ्रमागमिष्यामि सन्निधौ ॥ ४५ ॥

न तर्जनाधिया पत्रं मयेदं लिखितं सखे ।
परन्तु धर्म्यभावेन दुर्विधानरुरुत्सुना ॥ ४६ ॥

इदमाङ्ग्लस्य मित्रस्य हस्तेन प्रहिणोम्यहम् ।
रेनल्डाख्यस्य दैवेन नियुक्तस्येव कर्मणि ॥ ४७ ॥

---

# एकादशोऽध्यायः

अर्विणस्य महात्मासौ प्रत्यपालयदुत्तरम् ।
अतिक्रान्तेऽपि सप्ताहे प्रतिलेखं न चाप सः ॥ १ ॥

यथोक्तमथ मासस्य महात्माऽहनि निश्चिते ।
निर्जगामाश्रमात्प्रातर्धर्मयात्राचिकीर्षया ॥ २ ॥

दण्डहस्तोऽल्पपाथेयी नग्नस्कन्धोऽल्पवेष्टितः ।
साष्टसप्ततिशिष्यश्च प्रतस्थे दाण्डिपल्लिकाम् ॥ ३ ॥

सर्वे श्रद्धान्विताः शिष्या अहिंसाबलवेदिनः ।
यथोक्तकारिणश्चासन् गान्धिनैव स्वयं वृताः ॥ ४ ॥

सहानुगैर्महात्मासौ भङ्क्तुं लवणशासनम् ।
दूरं सार्धशतक्रोशं प्रचचालाभि सागरम् ॥ ५ ॥

प्रभाते प्रस्थितं गान्धिं ग्रामीणास्तं दिदृक्षवः ।
पञ्चक्रोशायते मार्गे विस्मिताः सङ्कुलाः स्थिताः ॥ ६ ॥

नाश्रमं पुनरेष्यामि यावद्देशो न मुच्यते ।
इति तस्य व्रतं ज्ञात्वा लोका वर्त्मन्यजागरुः ॥ ७ ॥

धर्म्येयमन्तिमा यात्रा कर्तव्या सम्प्रदायतः ।
अतः पद्भ्यां चरिष्यामि जगादेति शुचिव्रतः ॥ ८ ॥

पांसुलेनाध्वना गच्छन् विललम्बे प्रतिस्थलम् ।
उपदेष्टुं जनान् सर्वान् प्रस्तुतं कार्यगौरवम् ॥ ९ ॥

बान्धवा अयि वर्तध्वं सत्याग्रहनियन्त्रिताः ।
विधिं क्षारस्य भङ्क्तेति ग्राम्यलोकानबोधयत् ॥ १० ॥

अधिकारपदान्यार्याः सपदि त्यक्तुमर्हथ ।
इति विज्ञापितास्तेन ग्रामेशास्तानि तत्यजुः ॥ ११ ॥

महात्मा तीरमम्भोधेर्न यावत्प्रत्यपद्यत ।
तावदेवाङ्ग्लकैङ्कर्यमजहुर्द्विशताधिकाः ॥ १२ ॥

उपस्थितस्ततो गान्धिश्चत्वारिंशत्तमे दिने ।
दाण्डिग्रामं निरानन्दं लवणक्षेत्रसंयुतम् ॥ १३ ॥

प्रागेव ध्वंसनं कर्तुं नियुक्तैर्ग्रामरक्षिभिः ।
उन्मूलितानि सर्वाणि क्षेत्राणि लवणस्य हि ॥ १४ ॥

महात्मा तत आरेभे क्षारनिष्कर्षमम्बुधेः ।
परःशतानां ग्राम्याणां समेतानां समक्षतः ॥ १५ ॥

गान्धिना शासने भग्ने क्षणात्तदनुयायिनः ।
क्षारन्यासमुपादाय न्यवृतञ्छिविरं निजम् ॥ १६ ॥

दण्डकाष्ठायुधोपेतास्तन्निवासमतर्कितम् ।
रक्षकास्तत आगत्य तेभ्यः सर्वमपाहरन् ॥ १७ ॥

विधिभङ्गोद्यता लोकाः प्रत्यावर्तन्त सागरम् ।
कृत्वा च लवणं भूरि न्यक्षिपंस्तद् गृहे गृहे ॥ १८ ॥

अनिरुद्धस्ततो गान्धिर्विसृज्य पुरुषान् शतम् ।
जगाम ग्राममन्यं स च्छेत्तुं लवणशासनम् ॥ १९ ॥

मुम्बापुर्यां च तत्काले यथा सर्वासु दिक्षु च ।
क्षारं निष्पादितं लोकैः शासनं भङ्क्तुमिच्छुभिः ॥ २० ॥

लवणस्य कृतिर्नीता हास्यतामधिकारिभिः ।
अनादृता ततश्चाङ्ग्लैरुद्धतैरात्ममानिभिः ॥ २१ ॥

क्षारनिष्पादनेच्छाग्नौ प्रसृते वडवाग्निवत् ।
क्रोधो भयं च सञ्जाते शासितुर्मूढचेतसि ॥ २२ ॥

प्रस्थितो धार्सनग्रामं गान्धिरासिध्यतां द्रुतम् ।
इति प्रतिनिधेराज्ञां प्राप्नुवन् ग्रामरक्षिणः ॥ २३ ॥

अथ रात्रौ कराडिस्थः सुखसुप्तः परिश्रमात् ।
मधुमासस्य पञ्चम्यां गान्धिरग्राहि रक्षकैः ॥ २४ ॥

यत्त्वया शासनं भग्नं दण्डार्हस्त्वमतो मतः ।
इति राजनिदेशं ते प्रबोध्यैनमदर्शयन् ॥ २५ ॥

तं रजन्यां तमोमय्यां निन्युः सपदि रक्षिणः ।
लोकविक्षोभमाशङ्क्य जवात्पुण्यपुरान्तिकम् ॥ २६ ॥

प्रतिपेदे स पुण्यात्मा रक्षितः पुण्यपत्तनम् ।
चिक्षिपे च ततो नीतो यरोडाबन्धनालये ॥ २७ ॥

क्षणेन बन्धुभिः स्निग्धैर्गान्धिरेव वियोजितः ।
स्वैरचारिष्वनेकेषु गौराङ्गेष्वपराधिषु ॥ २८ ॥

हाहाकारेऽपि सञ्जाते गान्धिबन्धनवार्तया ।
प्रशस्योऽभवदाचारो लोकानां सुनियन्त्रितः ॥ २९ ॥

महात्मना यथादिष्टं तथा कार्यमकारि तैः ।
विदेशाम्बरमद्यादिबहिष्कारपुरस्सरम् ॥ ३० ॥

---

# द्वादशोऽध्यायः

तीव्रसंवेगतो यत्नः क्षारनिर्माणकर्मणि ।
मुम्बापुर्यां च सोत्साहैः सत्याग्रहिभिराश्रितः ॥ १ ॥

सर्वात्मना निमग्नोऽभूत्कार्ये तस्मिन्नहर्निशम् ।
एकचित्तो जनः कृत्स्नो निरस्तविषयान्तरः ॥ २ ॥

मिलितो जलधेस्तीरे नराणामुदधिः परः ।
अक्षोभ्यः क्लेशवात्याभिः कार्यगाम्भीर्यदुस्तरः ॥ ३ ॥

वडालाद्धार्सनादारादवस्कन्दः कृतो जनैः ।
क्षेत्रेषु राजकीयेषु लवणस्य जिहीर्षया ॥ ४ ॥

प्रत्यहं शतशो लोका गृहीताः पुररक्षकैः ।
तथापि नरनारीणां श्रेणयः सर्वतोऽचलन् ॥ ५ ॥

अनुभूतं परं कष्टं कारासु बहुभिर्जनैः ।
अदृष्टपूर्वसङ्क्लेशैर्विभवोत्तरजीविभिः ॥ ६ ॥

क्षारन्यासप्रदेशेषु नरनारीकदम्बकम् ।
क्षाराकर्षसमुद्युक्तमतिक्रौर्येण ताडितम् ॥ ७ ॥

अहो पूजास्पदं तेषां श्लाघ्यमाचरणं खलु ।
कृत्स्नघातसहिष्णूनामहिंसाव्रतधारिणाम् ॥ ८ ॥

दण्डप्रहारसंविद्धैर्निर्भयैर्दृष्टपौरुषैः ।
राष्ट्रीयरुग्णगेहानि पूर्यन्ते स्म क्षतैर्जनैः ॥ ९ ॥

मस्तके ताडिताः केचिदुरसि प्रहृताः परे ।
केचिद्भग्नास्थिकाश्चान्ये निष्कृष्टोपस्थभागकाः ॥ १० ॥

हृतवस्त्राः परे केचिद्रुदे निष्ठुरताडिताः ।
धरण्यां मूर्च्छिताः पेतुः प्रशान्ता देशसेवकाः ॥ ११ ॥

ततो रक्षिभिराकृष्टा भारतीयनरासुरैः ।
कण्टकावृतिषु क्षिप्ताः खातकेषु जलेऽथवा ॥ १२ ॥

अहो नैच्यमचिन्त्यं तद्देशबन्धुविघातिनाम् ।
मूर्च्छितानपि हिंसन्तो यदेते न व्यरंसिषुः ॥ १३ ॥

अधर्म्यैव प्रवृत्तिर्हि शासनस्यास्य दुःसहा ।
निदानं नीचभावस्य तेषां दास्योपजीविनाम् ॥ १४ ॥

दुष्टशासनपाशेन बद्धाः परवशीकृताः ।
निरूढदासभावास्ते चरन्ति पशुवृत्तयः ॥ १५ ॥

निसर्गाद्बुद्धिमन्तोऽपि तमसा परिमोहिताः ।
सञ्जाता दुर्गता लोकाश्छिन्नपक्षाः खगा इव ॥ १६ ॥

अज्ञानं भारतस्यैवमपकर्षस्य कारणम् ।
अपकर्षाच्च सम्पन्नो ध्वंस आध्यात्मिको ध्रुवम् ॥ १७ ॥

अथ किं चित्रमज्ञास्ते विकर्मण्यपि योजिताः ।
पशुवद्यदि वर्तेरन् रक्षिणो नष्टबुद्धयः ॥ १८ ॥

के वयं कस्य देशोऽयं कुतोऽस्माकमधोगतिः ।
किं धर्म्यं किमधर्म्यं चेत्यज्ञैरेतन्न चिन्तितम् ॥ १९ ॥

अत्याचारस्य वृत्तान्तो रक्षिवर्गस्य धार्सने ।
प्रसिद्धिं नीयमानोऽपि शासकैरवधीरितः ॥ २० ॥

एवं वन्दीक्रियन्ते स्म लोकास्तावद्दिने दिने ।
अतिघोरमभूद्यावदाङ्ग्लराज्यं सुदुःसहम् ॥ २१ ॥

अहो उदारसत्त्वानामिदं युद्धं महाद्भुतम् ।
येशुगौतमकृष्णानां सत्त्वोत्कर्षेण सम्मितम् ॥ २२ ॥

अहो सत्याग्रहस्यायं प्रभावः परमोर्जितः ।
यः पाशवबलं शत्रोर्ध्रुवं परिभविष्यति ॥ २३ ॥

स्वराज्यैकाग्रचित्तानां मुम्बापुरनिवासिनाम् ।
प्रवृत्तिः शासनं भङ्क्तुमतिभूमिं गताऽञ्जसा ॥ २४ ॥

निषिद्धेष्वपि सर्वत्र सभासम्मेलनादिषु ।
सर्वतः सम्मिलन्ते स्म राष्ट्रीयाः कार्यसाधकाः ॥ २५ ॥

प्रतिरोद्धुं समर्थः कः स्रवन्तीनां समागमम् ।
सिन्धुसंयोगकामानां तत्समा हि प्रजागतिः ॥ २६ ॥

व्याख्यास्यन्तः सुवक्तारो धर्मयुद्धस्य गौरवम् ।
कृता बद्धमुखाः सद्यो रुद्धा नीताश्च बन्धनम् ॥ २७ ॥

निर्दोषाः सज्जना एते न्यायभङ्गाभिशंसिताः ।
परीक्षणार्थमाहूता न्यायागारे परेद्यवि ॥ २८ ॥

गुप्तमावेदितः कृत्यं शासकैर्यच्चिकीर्षितम् ।
न्यायाध्यक्षोऽददाद्दण्डं निर्दिशन् बन्धनावधिम् ॥ २९ ॥

मण्डलं नरनारीणां व्यापृतानां स्वकर्मसु ।
निस्सारितं बलान्नित्यं निर्घृणैर्दण्डताडनैः ॥ ३० ॥

देशभक्तो निजप्राणान् मन्यते यस्तृणोपमान् ।
ताडनात्तस्य किं दुःखं बन्धनात्तस्य किं भयम् ॥ ३१ ॥

सेवकेष्वपनीतेषु प्रत्यहं च सहस्रशः ।
कृतमेवेतरैः कार्यं यथादिष्टं महात्मना ॥ ३२ ॥

त्यक्तविद्यालया नैके व्यापृतास्तरुणाः स्थिताः ।
न्यायवादिभिषग्वर्यास्तथा च त्यक्तवृत्तयः ॥ ३३ ॥

यदा यदा मृषाख्यानैर्बलाद्बद्धा हि नायकाः ।
तदा तदा स्थितो लोको गौरवाद्विरतोद्यमः ॥ ३४ ॥

कार्यालयेषु सर्वेषु बद्धद्वारेषु सर्वतः ।
मुम्बापुरी निरुद्योगा भवति स्म पुनः पुनः ॥ ३५ ॥

अथो दिनेषु गच्छत्सु योषितः सत्कुलोद्भवाः ।
आत्मानं राष्ट्रकृत्येषु सानन्दं समयोजयन् ॥ ३६ ॥

नारीणां विविधाः सङ्घा विदुषीभिर्विनिर्मिताः ।
कार्यक्रमप्रचारार्थं राष्ट्रसंसदुपाश्रयाः ॥ ३७ ॥

आसायं प्रातरारभ्य निश्चला योषितः स्थिताः ।
आपणेषु निरुन्धाना विदेशाम्बरविक्रयम् ॥ ३८ ॥

परदेशीयवस्त्राणि बहिष्कुरुत बान्धवाः ।
उपयोगो यतस्तेषां देशनाशस्य कारणम् ॥ ३९ ॥

क्रीणीध्वं खद्दरं वासो दीनानामन्नदायकम् ।
इति ग्राहकलोकांस्ताः प्रार्थयन्ते स्म सेविकाः ॥ ४० ॥

तरुणीनां गणः स्थित्वा मद्यगेहस्य सन्निधौ।
परमर्थकरं राज्ञो न्यरुधन्मद्यविक्रयम् ॥ ४१ ॥

अहो मद्यमिदं नूनं बान्धवा आत्मघातकम्।
निवर्तध्वमतस्तस्मात्सर्वविध्वंसकारणात् ॥ ४२ ॥

मद्यपानपरित्यागात् क्षीयन्ते सङ्कटानि वः।
दीनानां सकुटुम्बानामित्यूचुस्ताः सुराप्रियान् ॥ ४३ ॥

अनादृतास्तरुण्यस्ता ग्राहकैः पानलम्पटैः।
शप्ता विक्रयिकैश्चापि स्ववृत्तिमजिहासुभिः ॥ ४४ ॥

सर्वकष्टसहिष्णूनां स्थितानां शौण्डिकापणे।
सेविकानां दृढो यत्नः शनैः सफलतामगात् ॥ ४५ ॥

अवगम्य सुरासक्ताः प्रचलद्युद्धगौरवम् ।
व्यसनाद्विमुखीभूय मद्यस्थानानि तत्यजुः ॥ ४६ ॥

संवव्रुरापणान् केचिन्मद्यविक्रयजीविनः ।
इतरे स्वार्थनिष्ठास्तु हिंसकां वृत्तिमाचरन् ॥ ४७ ॥

विदेशीयानि वस्त्राणि विहाय नचिराज्जनः ।
वसितुं खद्दरं वासः प्रारभन्त सगौरवम् ॥ ४९ ॥

मुम्बापुर्यचिरेणैव बभूव धवलाम्बरा ।
खद्दरेणैव सर्वेषु वेष्टितेष्वाशिरःपदम् ॥ ४९ ॥

बहिष्कारव्रते लोकैर्निश्चितैः सुप्रचारिते ।
आङ्ग्लानां वस्त्रवाणिज्यं क्षीयते स्म शनैः शनैः ॥ ५० ॥

वाणिज्यस्याङ्ग्लेयानां भारताश्रयजीविनाम् ।
कुशलैराङ्ग्लदेशेऽपि क्षयः समवलोकितः ॥ ५१ ॥

स्वराज्यकाङ्क्षिभिः कार्यक्रम इत्थं प्रवर्तितः ।
राष्ट्रीयावर्तसंलग्नैः स्वदेहनिरपेक्षिभिः ॥ ५२ ॥

आत्मशक्तिप्रधानेऽस्मिन् युद्धे पशुबलान्वितैः ।
अत्याचाराः कृता आङ्ग्लैः पृथिव्यां पूर्वमश्रुताः ॥ ५३ ॥

भारते सर्वतो दिक्षु राष्ट्रीया भग्नशासनाः ।
ग्रस्ताः कारान्धकारेण क्षणादेव सहस्रशः ॥ ५४ ॥



# त्रयोदशोऽध्यायः

अथो दिनेषु गच्छत्सु लोकक्षोभ उपस्थितः ।
पुरे पेशावरे चापि चौरीचौरानुबोधकः ॥ १ ॥

निरुद्धा नायका यावद्वत्सलाः कारणादृते ।
क्षुभिता जनता तावत्संयतापि व्रतेन सा ॥ २ ॥

गृहीतान् रक्षकैर्नेतॄन् देशभक्त्यैव दोषिणः ।
तज्जयं घोषयन्नुच्चैर्जनौघोऽनुससार तान् ॥ ३ ॥

जनकोलाहलत्रस्तैरथ विप्लवशङ्किभिः ।
रक्षिभिः प्रार्थि साहाय्यमाङ्ग्लसैन्यस्य सत्वरम् ॥ ४ ॥

अभ्यापतत् क्षणादेव तज्जनौघे रथद्वयम् ।
अग्न्यस्त्रगुलिकापूर्णं लोकविध्वंसनोद्यतम् ॥ ५ ॥

निर्भये जनवृन्देऽस्मिन् भीषणं तद्रथद्वयम् ।
अभिदुद्राव वेगेन ध्वंसयत्सुबहूञ्जनान् ॥ ६ ॥

निर्दोषा निहता नैके दारुणायां महापदि ।
विकीर्णाश्च मृतै रथ्या दग्धैरिव पतङ्गकैः ॥ ७ ॥

तत्रैकस्तुरगारूढः समायानाङ्ग्लकिङ्करः ।
मर्दितो रथयोर्मध्ये सत्वरं पञ्चतां गतः ॥ ८ ॥

अथ वीरेष्वनेकेषु विद्धेष्वपि विघातुकैः ।
निश्चलाः सङ्कुले तस्मिन्नितरे निर्भयाः स्थिताः ॥ ९ ॥

दृष्ट्वा स्वबान्धवान् विद्धान् वृद्धा काचिदुपासरत् ।
हता च गुलिकावृष्टया परैः संयोजिता मृतैः ॥ १० ॥

सार्भको जरठः कश्चित्कम्पितो घोरदर्शनात् ।
दृष्ट्वा मृतास्थितान्भूमौ भीतः प्राचलदग्रतः ॥ ११ ॥

बालं रक्षितुकामोऽपि कर्तव्यमविदन् बत ।
प्राविशत्तुमुले तस्मिन् भ्रान्तचित्त इवानले ॥ १२ ॥

कुरुध्वं गुलिकाक्षेपं मयीति करुणं ब्रुवन् ।
नृशंसैस्तद्वचः श्रुत्वा सार्भको हत एव सः ॥ १३ ॥

शकटेषु शवान् सर्वान् राशीकृत्य दुरात्मकाः ।
अनावेद्यैव बन्धुभ्यः काष्ठवच्चिक्षिपुर्जले ॥ १४ ॥

ततो यावत्स विक्षोभो वर्धते स्म जने पुनः ।
तावदाज्ञापिताः क्षेप्तुमाग्नेयास्त्रं घरीबलाः ॥ १५ ॥

आज्ञा सेनापतेर्घोरा सैनिकैस्तैरनादृता ।
परिणामं तृणीकृत्य स्वप्रवृत्तेः सुदारुणम् ॥ १६ ॥

रक्षणार्थं स्वदेशस्य वयं सैन्ये नियोजिताः ।
उपद्रवादमित्राणां न तु हन्तुं स्वबान्धवान् ॥ १७ ॥

सम्पातं न करिष्यामो निःशस्त्रेषु स्वबन्धुषु ।
हन्येमहि वधार्हाश्चेदित्यवोचन् घरीवलाः ॥ १८ ॥

निजाज्ञोल्लङ्घनक्रुद्धस्तत्क्षणात्स चमूपतिः ।
सैनिकानामनेकेषां वधदण्डं समादिशत् ॥ १९ ॥

एकस्तु तेषु वीरेषु यावज्जीवं प्रवासितः ।
सैनिका अवशिष्टाश्च कृताः कारानिवासिनः ॥ २० ॥

सज्जनाः खलु ते पूज्यास्त्यक्तस्वातन्त्र्यजीविताः ।
परिहर्तुं स्वबन्धूनां वधं देशप्रयासिनाम् ॥ २१ ॥

राष्ट्रीयाणां वशे न्यस्य लोकानाङ्ग्ला गताः पुरात् ।
अचिरात्तु न्यवर्तन्त सविमानाः ससैनिकाः ॥ २२ ॥

निषिद्धेऽपि हठादाङ्ग्लैर्निष्क्रमे नगराद्बहिः ।
कृतमुल्लङ्घनं कैश्चित्ततो रुद्धाश्च नायकाः ॥ २३ ॥

प्रस्थिता लोकयात्राथ स्वानुकम्पाप्रदर्शिनी ।
पेशावरस्य रथ्यासु जयघोषं वितन्वती ॥ २४ ॥

आरब्धो गुलिकाक्षेपो जनौघे सैनिकैः पुनः ।
जनाः सप्त न्यहन्यन्त बहवश्च परिक्षताः ॥ २५ ॥

इति पेशावरस्याभूत्संहारोऽतिभयावहः ।
प्रलयान्तेऽप्यविस्मार्यो महाक्लेशार्दितैर्जनैः ॥ २६ ॥

किमुत्तरं प्रदास्यन्ते शासका दुष्टबुद्धयः ।
स्वकर्मणां परे लोके येशुक्रिस्तानुवर्तिनः ॥ २७ ॥

किं धर्मेण प्रभोर्येशोस्त्यक्तासोः प्राणिनां कृते ।
तदौदार्यविरुद्धं चेद्वर्तेरन्ननुयायिनः ॥ २८ ॥

पुण्याचारेऽभ्युपेतेऽपि येशुक्रिस्तानुयायिभिः ।
कथं नु शासकैरित्थं परं दौरात्म्यमाश्रितम् ॥ २९ ॥

क्रैस्तवेदेन किं कार्यं दशाज्ञाभिश्च किं फलम् ।
को वाऽर्थश्चरितैः पुण्यैर्येशुक्रिस्तमहात्मनः ॥ ३० ॥

किं वा धर्मोपदेशेन प्रार्थनामन्दिरेण वा ।
किं च पातेन जानुभ्यां किं वा ध्याननिमीलनैः ॥ ३१ ॥

किं दृष्टान्तैरुदारैस्तैः किं येशोः कीर्तितैर्गुणैः ।
सत्यदानदयाधर्मक्षमाधृतिमुखैरपि ॥ ३२ ॥

ईश्वरस्य वयं पुत्रा इति नित्याभिमानिनः ।
कथं कापटिका एते विशेयुर्येशुमन्दिरम् ॥ ३३ ॥

क्रैस्तधर्मप्रसारार्थमायान्तीहोपदेशकाः ।
आङ्गला भारतं वर्षमिति किं न विडम्बना ॥ ३४ ॥

किं पुनः शिक्षयेयुस्ते येशुधर्मस्य बोधकाः ।
सौम्यवृत्तीञ्जनानत्र हिन्दुधर्मानुसारिणः ॥ ३५ ॥

वरं यदि यतेरंस्ते परिवर्तयितुं स्वकान् ।
रोगिणामनिवार्या हि चिकित्सा न त्वरोगिणाम् ॥ ३६ ॥

लोभः परधनस्यापि व्याधिरित्येव गण्यते ।
अनेन व्याधिना ग्रस्ताः पाश्चात्त्या वृद्धिलालसाः ॥ ३७ ॥

व्याधेरस्माद्धि जायन्ते व्याधयोऽन्ये महोल्बणाः ।
ते पुनः क्रमशो नाशमुपनेष्यन्ति रोगिणः ॥ ३८ ॥

स्वदेशे सुखहीनस्सन् विदेशं स्वीकरोति यः ।
न तेन फलमेष्टव्यं देशयोरुभयोरपि ॥ ३९ ॥

भारते नानुरक्ताश्चेच्छासकाः पक्षपातिनः ।
तेषामवस्थितेरत्र हेतुः स्वार्थैकनिष्ठता ॥ ४० ॥

येशुना बोधितो धर्मो भारते न हि नूतनः ॥
स ह्यनादिः समुद्घुष्टो वेदशास्त्रैः सनातनैः ॥ ४१ ॥

येशोः पूर्वमसौ जातः सिद्धार्थो नाम भास्करः ।
अज्ञानतिमिरं हर्तुं जगतो निजतेजसा ॥ ४२ ॥

किं चित्रं भारतीयाश्चेदाचरेयुः सुसंयताः ।
धर्मनिष्ठां यथातत्त्वं सत्याग्रहनियोधने ॥ ४३ ॥

वरं स्वार्थपरा आङ्ग्लाः शिक्षेरन् यदि भारतात् ।
सहिष्णुत्वमनौपम्यं पाश्चात्त्येषु यदश्रुतम् ॥ ४४ ॥

जगतः शिक्षणायेदं कल्पते युद्धमद्भुतम् ।
यदस्यामोघतत्त्वानि न्यदर्शिपत कार्यतः ॥ ४५ ॥

## चतुर्दशोऽध्यायः

अल्पमात्रे गते काले सञ्जातं घोरसङ्कटम् ।
सोलापुरे प्रभुत्वस्य लाञ्छनं शासितुः परम् ॥ १ ॥

मद्यपानं निराकर्तुं राष्ट्रीयैः कार्यनिष्ठितैः ।
तालीद्रुमेषु कृत्तेषु कुप्यन्ति स्माधिकारिणः ॥ २ ॥

आज्ञानुवर्तिभिस्तेषामारब्धं राजपूरुषैः ।
प्रहर्तुं निर्घृणं काष्ठैः खर्जूरीतरुघातिनः ॥ ३ ॥

विक्षोभितैर्जनैर्यात्रा प्रस्तुता महती पुनः ।
शासितुर्दुष्कृतं घोरं प्रतिषेद्धुं समन्ततः ॥ ४ ॥

हतोऽस्मिन् लोकविक्षोभे रक्षी दैवेन कश्चन ।
राजहर्म्याण्यदह्यन्त केनापि तुमुले तथा ॥ ५ ॥

निक्षिप्ते तद्व्यारोपे जनौघेष्वधिकारिभिः ।
रक्षार्थं तैः समाहूतमाङ्ग्लसैन्यं पुरान्तरात् ॥ ६ ॥

लब्धपूर्णाधिकारैश्च सैनिकैः स्वैरवृत्तिभिः ।
अत्याचाराः कृता घोरा इतिहासेषु दुर्लभाः ॥ ७ ॥

स्वेच्छया गुलिकाक्षेपस्तैः कृतोऽनपराधिषु ।
जनस्यापहृतं वित्तं धर्षिताश्च कुलाङ्गनाः ॥ ८ ॥

बलात्कारपरिक्षुब्धैरथ दुर्नयपीडितैः ।
प्रतिरुद्धो जनैर्मार्गे राजभृत्यवहो रथः ॥ ९ ॥

जनौघरथयोर्मध्ये तदा स्तम्भ इव स्थितः ।
धनश्रेष्ठीति विख्यातो नायको लोकमानितः ॥ १० ॥

संवदेयं जनैर्यावत्सान्त्वयेयं च कोपितान् ।
निर्गम्यतां द्रुतं तावदित्याङ्ग्लान् स उपादिशत् ॥ ११ ॥

विक्षोभितो जनौघश्च श्रेष्ठिना सान्त्वितः शनैः ।
साहाय्येन वयस्यानां त्रयाणां सहचारिणाम् ॥ १२ ॥

सान्त्वयित्वा जनस्तोमं रक्षितेष्वधिकारिषु ।
कृतघ्नैः सवयस्योऽयं राजकीयैरदूष्यत ॥ १३ ॥

रक्षकस्य निहन्तारश्चत्वारोऽमी जना इति ।
मिथ्याभिशंसनाक्षिप्ता निरुद्धास्तेऽधिकारिभिः ॥ १४ ॥

एवं तेष्वभियुक्तेषु लोकमान्येषु नेतृषु ।
सञ्जातो भारते वर्षे हाहाकारो यतस्ततः ॥ १५ ॥

धर्मशास्त्रेण किं कार्यं किं न्यायेन प्रयोजनम् ।
क्रियते कुप्रयोगश्चेत्प्रभुत्वस्याधिकारिभिः ॥ १६ ॥

का प्रतिष्ठा हि धर्मस्य निर्दोषा यदि दूषिताः ।
न्यायाध्यक्षैश्च किं तैर्वा ये चरेयुरधर्मतः ॥ १७ ॥

निरागसोऽपि चत्वारः ख्यापिता अपराधिनः ।
तत्पुर्यां दण्डपालेन प्रत्यैक्षन्तान्त्यनिर्णयम् ॥ १८ ॥

चतुर्षु दह्यमानेषु प्राणसंशयवह्निना ।
अद्योपास्ते विमुच्यन्तामिति लोका ययाचिरे ॥ १९ ॥

तथाप्यनादृता तेषां बन्धमुक्त्यभिकाङ्क्षिणाम् ।
प्रजात्रासोद्यतैर्याच्ञा दुष्टराज्याधिकारिभिः ॥ २० ॥

अथ मासेषु गच्छत्सु चत्वारो दैवविप्लुताः ।
मुम्बापुरीमनीयन्त विचारायान्तिमाय ते ॥ २१ ॥

आसीद्धर्मसभा युक्ता चतुर्भिर्न्यायदर्शिभिः ।
तेषामाङ्ग्लास्त्रयश्चान्यो गोविन्दाख्यः स्वदेशजः ॥ २२ ॥

इमे त्रयोऽपि निर्दोषाश्चतुर्थे त्वल्पसंशयः ।
इति निर्णय आचख्ये गोविन्देन हि तत्त्वतः ॥ २३ ॥

देशीयप्राड्विवाकस्य निर्णयस्समदर्शिनः ।
तत्सहायैरवज्ञातो मोक्तुमेताननिच्छुभिः ॥ २४ ॥

न्यायाध्यक्षोऽथ गोविन्दः करालप्रतिनिर्णयात् ।
नाशक्नोद्रक्षितुं साधून् देशबन्धूननागसः ॥ २५ ॥

अपराधिन इत्याङ्ग्लैर्निश्चिते न्यायदर्शिभिः ।
वधदण्डः समादिष्टश्चतुर्णामपि बन्दिनाम् ॥ २६ ॥

का नाम गणना प्राणैर्देश्यानां परशासितुः ।
वरं हि तस्य ते नष्टा न जीवन्तो विरोधिनः ॥ २७ ॥

तेनान्यायेन सञ्जातो महाक्षोभः समन्ततः ।
निर्दोषिरक्षणाशक्तं तप्यते स्म च भारतम् ॥ २८ ॥

दुरात्मन्याङ्ग्ले राज्ये न्याय एवं विधीयते ।
यस्यार्थः केवलं पीडा प्रजानां न तु रक्षणम् ॥ २९ ॥

एकोऽपि वस्तुतो न्यायो द्विविधः स्यात्प्रयोगतः ।
आङ्ग्लायैकः सदोपाय देश्यायैको निरागसे ॥ ३० ॥

किं कार्यं परराज्येन सततं पक्षपातिना ।
हितेप्सुना सवर्णानां देशजानां विघातिना ॥ ३१ ॥

पाश्चात्त्येषु ह्यनेकेषु कृतघातेष्वनेकदा ।
न्यायो व्यनक्ति केनापि व्याजेन किल सौम्यताम् ॥ ३२ ॥

अर्थे तु भारतीयस्य न्यायो भिन्नप्रकारकः ।
शङ्कालवोऽपि पर्याप्तो यदाक्षेप्तुमनागसम् ॥ ३३ ॥

अनेनैव प्रकारेण भारतीयाः सहस्रशः ।
बन्धनं वापि दण्डं वा निर्दोषा अपि लम्भिताः ॥ ३४ ॥

धिग् राज्यं यन्न जानीयात् सत्यासत्यविवेचनम् ।
निजोत्कर्षमदोन्मत्तः कुतः कर्मफलं स्मरेत् ॥ ३५ ॥

किं वा श्रेयः प्रतीक्ष्येत स्वार्थिनः परशासितुः ।
भारते यः स्थितोऽप्यस्मिन् स्वदेशाभिमुखः सदा ॥ ३६ ॥

---

# पञ्चदशोऽध्यायः ।

यथा यथा प्रजापीडा गता वृद्धिं तथा तथा ।
क्रमो राष्ट्रियकार्यस्य परां कोटिमुपागतः ॥ १ ॥

राष्ट्रीयसंसदध्यक्षैरनुमत्या सभासदाम् ।
युद्धसङ्घाः प्रतिस्थानं यथाविधि विनिर्मिताः ॥ २ ॥

अध्यक्षाधिष्ठिताश्चैते साङ्गोपाङ्गबलोर्जिताः ।
कृत्स्नराष्ट्रीयकार्याणामनुयोज्याः प्रकल्पिताः ॥ ३ ॥

जनप्रस्थानहेतोर्वा सभामेलनतोऽपि वा ।
ध्वजारोपनिमित्तं वा लवणस्य कृतेऽपि वा ॥ ४ ॥

दूषितो युद्धसङ्घश्चेत्तदा राज्याधिकारिभिः ।
अध्यक्षः सपरीवारः क्षिप्यते स्म हि बन्धने ॥ ५ ॥

निषिद्धास्वपि संसत्सु समवेयुर्दिवानिशम् ।
राष्ट्रकार्योद्यता लोकाः सर्वेषु नगरेष्वपि ॥ ६ ॥

अथैकस्मिन् रवेर्वारे मुम्बापुर्यामजायत ।
अत्याचारः परं गर्ह्यो रक्षोवृत्त्यनुरूपकः ॥ ७ ॥

मिलिता युद्धसङ्घेऽस्मिन्नीतेऽवन्तिकया स्त्रिया ।
ध्वजारोपणकार्यार्थं नरनार्यः सहस्रशः ॥ ८ ॥

कार्येऽमुष्मिन्निषिद्धेऽपि दारुणैरधिकारिभिः ।
सत्याग्रहपरैर्लोकैः स निषेधो निराकृतः ॥ ९ ॥

समाप्ते ध्वजकार्येऽथ तत्रस्था सङ्घनायिका ।
अवन्तिका निरुद्धाभूत् प्रसभं राज्यशासकैः ॥ १० ॥

सङ्घर्षोऽथ महाञ्जातो मुम्बापुर्यां सुविश्रुतः ।
रक्षिणां दण्डहस्तानां देशसेवाजनस्य च ॥ ११ ॥

सेविकाभ्यो यदा हर्तुं न शेकू राष्ट्रियध्वजान् ।
रक्षिणः पशुतुल्यास्ते प्रहर्तुं ताः समुद्यताः ॥ १२ ॥

रक्तस्त्रावाप्लुताश्चापि पताकानां स्वचालवत् ।
अकुर्वन् रक्षणं यावन्मुमूर्च्छुर्देशसेविकाः ॥ १३ ॥

सहावन्तिकया क्षिप्ताः कारायां काश्चिदङ्गनाः ।
अन्या नीतास्तमोमय्यां रजन्यां निर्जनं वनम् ॥ १४ ॥

विसृष्टास्तत्र सन्नार्यो विविधक्लेशपीडिताः ।
भीषिताश्च नरव्याघ्रैर्निरन्नाश्च निराश्रयाः ॥ १५ ॥

दशक्रोशविदूरस्थाद् भयानकवनस्थलात् ।
स्वगेहं निर्भयं पद्भ्यां न्यवर्तन्त सहिष्णवः ॥ १६ ॥

अनेन कर्मणा तेषां दुष्टानां राज्यरक्षिणाम् ।
घोरवासरमित्येव स्मर्यतेऽद्यापि तद्दिनम् ॥ १७ ॥

प्रोत्साहकाः सुवक्तारो येऽहर्निशमुपादिशन् ।
लोकान् स्वदेशवात्सल्यं क्षिप्ताः कारालयेषु ते ॥ १८ ॥

ताड्यमानेष्वपि स्वैरं क्रूरैर्लोकेषु रक्षिभिः ।
अङ्गादाङ्गणमाजग्मुर्नरनार्यः सहस्रशः ॥ १९ ॥

दण्डं वा बन्धनं वाऽपि लाठिप्रहरणं तथा ।
स्वराज्यैकमनस्कत्वादमन्यन्त तृणाय ते ॥ २० ॥

यथा यथा हि कारासु क्षिप्ता लोकास्तथा तथा ।
पदं बन्दीकृतैर्मुक्तं स्पर्धयान्यैरधिष्ठितम् ॥ २१ ॥

एवं सङ्ख्या गरिष्ठाभूद् बन्दिनां देशसेविनाम् ।
झटित्यशीतिसाहस्रं प्रमुखा बन्दिनः कृताः ॥ २२ ॥

कलेवरं वशीकर्तुं समर्थोऽपि प्रशासकः ।
निश्चितानां महोत्साहमपहर्तुं न शक्नुयात् ॥ २३ ॥

अलं शमयितुं दीपं बालोऽपि श्वासलेशतः ।
निर्वापयितुमर्कस्य ज्योतिस्तु प्रभुरस्ति कः ॥ २४ ॥

भिन्द्यात्प्रायेण मल्लोऽपि शिलास्तम्भं बृहत्तरम् ।
कल्पान्तेऽपि न शक्तः स्याद्वक्रीकर्तुं मनागपि ॥ २५ ॥

जलमुत्कथितं चापि पुनर्गच्छति शीतताम् ।
मनस्तु क्षुभितं नृणां न निवर्तेत लक्ष्यतः ॥ २६ ॥

शक्यो वारयितुं चापि कथंचिद्वडवानलः ।
न तु मोहयितुं शक्यः सकृज्जागरितो जनः ॥ २७ ॥

अत एव प्रबुद्धास्ते महोत्साहप्रचोदिताः ।
देशकार्यपथे जग्मुर्भारतीयाः पुरः पुरः ॥ २८ ॥

---

# षोडशोऽध्यायः ।

अधर्म्या नियमास्तस्मिन् काले केचिद्विनिर्मिताः ।
प्रजास्त्रासयितुं भूयः क्रूरै राज्याधिकारिभिः ॥ १ ॥

परदेशीयवस्त्राणां विक्रयस्य निरोधकाः ।
दोषिणः कल्पिता नूत्नशासनस्य प्रभावतः ॥ २ ॥

नियमोल्लङ्घिनश्चेति वीराः स्वार्थपराङ्मुखाः ।
प्रत्यहं शतशो रुद्धा देशसेवासमुद्यताः ॥ ३ ॥

एवं नानाप्रकारेण जनेषु त्रासितेष्वपि ।
कार्यमेकफलासङ्गं प्राचलद्विरतिं विना ॥ ४ ॥

दृष्ट्वा निश्चयमेतेषां धन्यानां देशसेविनाम् ।
स्वार्थलुब्धो वणिग्लोकश्छद्मकर्मोपचक्रमे ॥ ५ ॥

तद्विक्रयाद्विरंस्याम इत्याश्रुत्यापि वञ्चकाः ।
प्राहिण्वन् परवस्त्राणि रजन्यां नगरान्तरम् ॥ ६ ॥

कापटयं वणिजां बुद्ध्वा तद्वाणिज्यं रुरुत्सवः ।
कुमाराः सैनिका रात्रौ सावधानमजागरुः ॥ ७ ॥

ततस्साहसमाश्रित्य छद्मजीवी वणिग्जनः ।
प्रजिघाय स्ववाणिज्यं यन्त्रयानैरहन्यपि ॥ ८ ॥

सैनिका अचलोत्साहा रथानां शिश्यिरे पुरः ।
विदेशवस्त्रपूर्णानां तद्विक्रयरुरुत्सया ॥ ९ ॥

दर्शितापूर्वधैर्यैस्तैस्तरुणैर्देशसेवकैः ।
आत्मानं धर्षितं मत्वा प्राकुप्यन्नधिकारिणः ॥ १० ॥

शयितानामुपर्येव रथाः सम्भारसम्भृताः ।
वाह्यन्तामिति पापात्मा दण्डपालः समादिशत् ॥ ११ ॥

दारुणे शासने तस्मिन् प्रवृत्ते चाप्यशेरत ।
पुरस्ताद्यन्त्रयानानां निर्भया देशसेवकाः ॥ १२ ॥

अथैकस्मिन् दिनेऽनर्थः सञ्जातोऽतिभयङ्करः ।
कारणं यस्य घोराज्ञा नृशंसस्याधिकारिणः ॥ १३ ॥

बाबुर्नाम युवा कश्चित्साहसी तनुजो गणोः ।
गमनोन्मुखयानाग्रे दण्डवत्पतितो भुवि ॥ १४ ॥

रक्षकैरप्यपाकृष्टः पशुकर्षं पशूपमैः ।
अशेत स युवा भूमौ रथस्याग्रे कृताञ्जलिः ॥ १५ ॥

स सारथिः पराधीनो देहस्योपर्यवाहयत् ।
रथं तस्य कुमारस्य चूर्णयन्नग्रमस्तकम् ॥ १६ ॥

याने तस्मिन्नतिक्रान्ते सञ्जज्ञे सम्भ्रमो महान् ।
परिवव्रुः समन्ताच्च गाणवं देशसेवकाः ॥ १७ ॥

देहस्योपर्यतिक्रान्ते यानेऽस्मिन्नपि घातुके ।
नानशन् गणुपुत्रस्य प्राणा वीरस्य कृत्स्नशः ॥ १८ ॥

मूर्च्छितस्तरुणो नीतो दयार्द्रैर्देशबन्धुभिः ।
गेहं गोकुलदासेन कल्पितं रोगिणां कृते ॥ १९ ॥

तस्योत्तरक्रियायाः प्राक् स्थापितः प्रेतमन्दिरे ।
आनिशान्तं शवस्तस्य दर्शनाय दिदृक्षुभिः ॥ २० ॥

अथाजग्मुर्जना रात्रौ मन्दिरं तत्सहस्रशः ।
गणुपुत्रमलङ्कर्तुं गन्धपुष्पसरादिभिः ॥ २१ ॥

तं युवानं नमश्चक्रुर्वृद्धाश्च तरुणैः समम् ।
आशिषश्चावदन्नार्यः स्पृशन्त्यस्तत्पदद्वयम् ॥ २२ ॥

अन्येद्युरनु तं जग्मुः श्मशानं शतशो जनाः ।
महावीरगतेर्योग्यं मानं तस्य चिकीर्षवः ॥ २३ ॥

किं धनैरसुभिः किं वा स्वदेशार्थमनर्पितैः ।
इतीव शासितुं लोकान् स युवा जीवितं जहौ ॥ २४ ॥

उदारं चरितं तस्य हर्षविस्मयदुःखदम् ।
सत्याग्रहस्य शत्रुभ्योऽप्यदर्शयत सारताम् ॥ २५ ॥

विक्रयात्परवस्त्रस्य ततः प्रभृति वाणिजाः ।
केचिद्विरम्य सम्भारान् मञ्जूषासु न्यवेशयन् ॥ २६ ॥

अतिष्ठन् पूर्ववत्केचित्स्वदेशार्थपराङ्मुखाः ।
राक्षसा मानुषाकाराश्छद्मसाधनतत्पराः ॥ २७ ॥

अहो एते दुराचारास्तिरस्कारास्पदं बत ।
अस्पृष्टं हृदयं येषां संस्कारैः शुभकर्मणः ॥ २८ ॥

तुरगश्वादयो मूका व्यञ्जयन्ति स्वचक्षुषा ।
दुःखाभिभूतमालोक्य स्वामिनं शोकमात्मनः ॥ २९ ॥

मानवीयगुणोपेतैर्वरं सङ्गश्चतुष्पदैः ।
न वणिग्भिस्तु सम्पर्को नरैरपि पशूपमैः ॥ ३० ॥

जाड्योपहतचेतस्त्वं नृणां निर्लज्जकर्मणाम् ।
रुणद्धि सुतरां वृद्धिं देशस्यापि तु नाशकम् ॥ ३१ ॥

भारभूता भुवः सन्ति प्रेततुल्या नरा इमे ।
स्वार्थैकतत्परत्वेन देशस्यैव विनाशकाः ॥ ३२ ॥

वरं ते नैव जाताः स्युर्देशकल्याणघातुकाः ।
प्रवृत्तिस्तामसी येषां देशदासत्वकारणम् ॥ ३३ ॥

परेभ्योऽपि स्वदेशीयाः शत्रवस्ते महत्तराः ।
इति चेतसि कर्तव्यं देशमुक्तिमभीप्सुभिः ॥ ३४ ॥

परस्य निर्जयात्पूर्वं स्वार्थमग्नान् वणिग्जनान् ।
देशभक्ता वशीकुर्युः सदुपायेन केनचित् ॥ ३५ ॥

किंनिमित्तं निरोद्धव्यो विदेशाम्बरविक्रयः ।
इति बोधयितव्यास्ते वचनैः सोपपत्तिभिः ॥ ३६ ॥

लोकाः परयुगे बद्धा बालेभ्योऽप्यबलाः किल ।
रोदनेनं जयेद्बालो दासस्तु न कथञ्चन ॥ ३७ ॥

प्रति शत्रुमशक्तानां बलमेकं हि केवलम् ।
परवस्त्रबहिष्कारः परं सत्याग्रहायुधम् ॥ ३८ ॥

अस्यायुधस्य माहात्म्यं न बुद्धमखिलैर्जनैः ।
सन्त्येव केचिदद्यापि सत्याग्रहविनिन्दकाः ॥ ३९ ॥

स्यार्थत्यागमुदाराणां चाक्षिपन्ति परेऽधमाः ।
सङ्ख्या त्वेषां विमूढानां हीयते दैवतः शनैः ॥ ४० ॥

सत्याग्रहस्य माहात्म्यं यदुक्तं गान्धिना पुरा ।
तेन तत्संशयालुभ्यः पुनश्च विशदीकृतम् ॥ ४१ ॥

देशसेवक एकैकः सोत्साहमवबोधयेत् ।
देशबन्धूर् विमूढांस्तान् सत्याग्रहसुवैभवम् ॥ ४२ ॥

कार्यमेतन्महाकष्टं कामं भवतु दुर्गमम् ।
तथापि न खलु त्याज्यं सुधीरैर्देशसेवकैः ॥ ४३ ॥

सुगमं यत्तु कार्यं स्यात्फलतो लघु तद्भवेत् ।
दुर्गमं चापि सत्कार्यं पुष्णाति फलगौरवम् ॥ ४४ ॥

अजरा तस्य कीर्तिः स्याद्येन मूढस्य चेतसि ।
तत्त्वं निरूढिमागेतं सुवचोभिः सयुक्तिकैः ॥ ४५ ॥

उत्पादयितुकामश्चेदुत्साहं बन्धुमानसे ।
निस्पृहः स चरेन्नित्यं स्वयं निरभिमानतः ।। ४६ ।।

राजायं विभवाढ्योऽयं क्रैस्तोऽयं पारसीयकः ।
नेमे शक्या निरुत्साहाः परिवर्तयितुं जनाः ।। ४७ ।

इति मत्वा न भेतव्यं देशसेवां चिकीर्षुभिः ।
दासभावपरिक्लिष्टैरवलम्ब्या हि धीरता ।। ४८ ।।

श्रुत्वापि वचनं युक्तं जनश्चेद्विमुखः स्थितः ।
भग्नाशो न भवेत्तेन देशभक्तो मनागपि ।। ४९ ।

हरेद्यौक्तिकवादेन विकल्पान् मन्दचेतसाम् ।
यावच्च नाप्नुयात्सिद्धिं जह्यात्कार्यं न सेवकः ।। ५० ।।

पुनः पुनः कृतो यत्नः प्रबोधाय जडात्मनाम् ।
न सिध्येद्यदि कर्तव्या समाजात्तद्बहिष्कृतिः ॥ ५१ ॥

बहिष्कारे कृते तेषामाशु शुद्धिर्भविष्यति ।
दृढेन व्यवसायेन कष्टमेवं समुत्तरेत् ॥ ५२ ॥

---

## सप्तदशोऽध्यायः ।

दिनैरथ व्यतिक्रान्तैररुध्यन्ताधिकारिभिः ।
राष्ट्रीयपरिवर्तेऽस्मिन् देशभक्ताः सहस्रशः ॥ १ ॥

अदण्ड्या अपि चत्वारः सोलापुरनिवासिनः ।
वधाज्ञाविषयीभूताः स्थिता मृत्युप्रतीक्षिणः ॥ २ ॥

भारतेनापि कृत्स्नेन तन्मोक्षे प्रार्थितेऽपि च ।
प्रापिता एव ते हन्त साधवो यमसन्निधिम् ॥ ३ ॥

अन्यायेऽस्मिन् कृते जातः क्षोभः सर्वासु दिक्ष्वपि ।
तत्रापि बोर्सदग्रामे भयोत्पादी विशेषतः ॥ ४ ॥

आसील्लीलावती नाम कुलीना गतभर्तृका ।
त्यक्तस्वार्था स्वदेशार्थं परार्थव्रतचारिणी ॥ ५ ॥

मुम्बापुर्यां पितुर्गेहं सुखावासं विसृज्य सा ।
प्रयाता बोर्सदग्रामे वस्तुं सत्यानुगैः सह ॥ ६ ॥

ग्रामीणेषु परं स्निग्धा सौम्यवृत्तिः सुभाषिणी ।
पर्यश्रमदहोरात्रं स्वयंसेवकमध्यगा ॥ ७ ॥

श्रुत्वा सा वधवृत्तान्तं सोलानगरबन्दिनाम् ।
बभूवातिसमुद्विग्ना सन्नारी समदुःखिता ॥ ८ ॥

निषिद्धास्वपि यात्रासु प्रस्थानं समयोजयत् ।
नैकग्राम्याङ्गनाभिः सा सम्मानार्थं निरागसाम् ॥ ९ ॥

प्रस्थानस्य स्वयं नेत्री धीरा लीलावती ततः ।
यथा वितर्कितं पूर्वं गृहीता रक्षकैर्हठात् ॥ १० ॥

रक्षिमण्डपमानीतां दुरात्मा रक्षकाधिपः ।
पप्रच्छ तां बहून् प्रश्नान् चिकीर्षुर्दारुणां व्यथाम् ॥ ११ ॥

किं ते नाम पिता कस्ते कुतः प्राप्ताऽसि दुर्मुखि ।
इति सा रक्षिणा पृष्टा यथार्हं प्रत्युवाच तम् ॥ १२ ॥

पृष्टा पुनः पितुर्वृत्तमभया सोत्तरं ददौ ।
प्रष्टव्यं भवता नेदं न पित्रा कार्यमस्ति वः ॥ १३ ॥

एवमुक्तस्तया कोपी गर्हमाणो नराधमः ।
लज्जामानविहीनश्च कपोले तामताडयत् ॥ १४ ॥

दृष्ट्वा तामविरुन्धानां सहमानां च दुष्कृतिम् ।
वृद्धमन्युः पुनः साध्वीं प्रजहार खलाधमः ॥ १५ ॥

प्रहारैरवसीदन्ती मूर्च्छिता निपपात सा ।
हठान्नीतापरेद्युश्च प्रातः कारालयं द्रुतम् ॥ १६ ॥

अचिरादेष वृत्तान्तो राक्षसीयस्य कर्मणः ।
प्रससर्प प्रतिग्रामं तनौ सर्पविषं यथा ॥ १७ ॥

अथ गर्ह्यो बलात्कारः पृथिव्यामपुराश्रुतः ।
उद्विग्नग्राम्यलोकेषु विक्षोभमुदपादयत् ॥ १८ ॥

नियोगोऽसौ सभारोधी निरस्तश्च दिनैस्त्रिभिः ।
लीलावत्याश्च मानार्थं प्रस्थानं निश्चितं जनैः ॥ १९ ॥

निर्दिष्टदिवसे चाथ सार्धसाहस्रयोषिताम् ।
स्तोमो युवतिवृद्धानां न्नोर्सदग्रामममभ्यगात् ॥ २० ॥

लीलावत्या जयोद्घोषं प्रतिध्वनिविमूर्च्छितम् ।
कुर्वाणः प्राविशत्सङ्घो बोर्सदस्य महापथम् ।। २१ ।।

विशाले महिलाव्यूहे समवेयुषि निर्भयम् ।
तस्थुरग्रे वयोवृद्धाः पश्चाद्युवतयोऽखिलाः ।। २२ ।।

व्यवस्थिता यथायोग्यं प्रारभन्त सदङ्गनाः ।
उद्गरीतुं जयोद्घोषं देशसख्यः कुलस्त्रियः ।। २३ ।।

क्षणादभ्यापतद् दूरादृश्यत सगर्जनम् ।
आग्नेयास्त्रैश्च दण्डैश्च सन्नद्धं रक्षिणां बलम् ।। २४ ।।

राज्याधिकृतदासास्ते प्रधावन्तोऽतिवेगतः ।
भीषणाकृतयः प्रापुर्ग्राम्यस्त्रीजनसन्निधिम् ।। २५ ।।

अयि दास्यश्च वेश्याश्च स्वस्वगेहानि गच्छत ।
स्तन्यं वा दत्त डिम्भेभ्यः सन्तर्पयत वा विटान् ॥ २६ ॥

न किञ्चिदिह कार्यं वस्त्वरितं गम्यतामितः ।
गोष्ठकेषु करीषाणि कुरुध्वं च यथोचितम् ॥ २७ ॥

अथ चेन्न निवर्तध्वे परं ताडनमाप्स्यथ ।
इत्यनेकैर्दुरालापैर्दुष्टास्तेऽतर्जयन्त ताः ॥ २८ ॥

अनादृत्य दुरुक्तानि निर्भयाः सपताकिकाः ।
घोषयन्त्यः स्थिता नार्यो जयशब्दं पुनः पुनः ॥ २९ ॥

शान्तवृत्तिषु तास्वेवं स्थितासु नरराक्षसाः ।
अभ्यद्रवन् सवेगं ते ग्राम्यस्त्रीजनमध्यतः ॥ ३० ॥

मदोन्मत्ता नरा एते ध्वजानपजिहीर्षवः ।
निर्घृणं ताडयामासुर्वृद्धाश्च तरुणीरपि ॥ ३१ ॥

प्रहृता अपि मानिन्यो न जग्मुः शरणं शठान् ।
परं मुमूर्षवो भूत्वा शिश्यिरेऽवाङ्मुखं भुवि ॥ ३२ ॥

उरसा पीडयन्त्यस्ताश्छिन्नयष्टीन् ध्वजांस्ततः ।
न्यपतन्निश्चला नार्यः सहमाना व्यथां पराम् ॥ ३३ ॥

अग्न्यस्त्राणां विकुण्ठाग्रैः काश्चित्पृष्ठे विमर्दिताः ।
इतराश्च नितम्बेषु पादुकाभिः प्रताडिताः ॥ ३४ ॥

सहमाना निराक्रोशमसह्यामपि वेदनाम् ॥
शिश्यिरे निश्चलाः सर्वा वोर्सदस्य वराङ्गनाः ॥ ३५ ॥

तरुण्यः पार्ष्णिभागस्थाः सहन्ते स्म महाव्यथाम् ।
काश्चिद्वेणीभिराकृष्टाः पादैरन्या दुरात्मभिः ॥ ३६ ॥

याः पुनः स्तनयोर्मध्ये ध्वजान्नार्यो जुगूहिरे ।
कुट्टितास्ता नरैर्नीचैर्निपेतुर्मूर्च्छिता भुवि ॥ ३७ ॥

इतरास्तु पराभूता व्यकीर्यन्त पृथक् पृथक् ।
विद्राविताः सफूत्कारं रक्षिभिश्च भयानकैः ॥ ३८ ॥

ग्रामाधिकारिणां मुख्या आहूता रक्षकैस्ततः ।
मूर्च्छितं योषितां वृन्दमपनेतुं स्थलान्तरम् ॥ ३९॥ ॥

बलात्कारस्थलं तच्च कोलाहलसमन्वितम् ।
राज्याधिकारिणः प्रापुः केनचिद्भिषजा सह ॥ ४० ॥

उपचारेण नार्यस्ताः पुनः संज्ञां विलम्भिताः ।
देहक्लेशार्दिताश्चापि न जहुर्ध्वजरक्षणम् ॥ ४१ ॥

दातुकामाञ्जलं नार्यः प्राहुस्तानाधिकारिणः ।
तृषयापि वरं मृत्युर्न तु पानमरेः करात् ॥ ४२ ॥

प्रत्युत्तरमिदं दत्त्वा दासेभ्यो नृपतेश्च ताः ।
वीराङ्गनाः स्वगेहानि बोर्सदीयाः पुनर्ययुः ॥ ४३ ॥

अचिरेणाहमाञ्जसा राष्ट्रियैर्बान्धवैस्ततः ।
प्रेक्षितुं बोर्सदीयानां क्षतस्त्रीणां दशां स्वयम् ॥ ४४ ॥

प्रस्थिताहमतः शीघ्रमङ्गनात्रयसङ्गता ।
उषःकालेऽपरेद्युश्च प्रापं भाद्रणपल्लिकाम् ॥ ४५ ॥

अपश्यं योषितो नैकाः क्लेशार्ता भाद्रणे तथा ।
निर्भग्नमस्तकाः काश्चिच्छिन्नाङ्गव्यथिताः पराः ॥ ४६ ॥

पर्याटिषं प्रतिग्रामं सह पत्न्या महात्मनः ।
पांसुदूषितमार्गेण गाढदुर्भिक्षशंसिना ॥ ४७ ॥

प्रेक्षितं बोर्सदस्याथ चतुःशालं मया पथि ।
यत्र स्वधर्मतः प्रापुरचिरात्कीर्तिमङ्गनाः ॥ ४८ ॥

विसृष्टेषु निवासेषु ग्रामीणैस्त्यक्तकर्मभिः ।
न कोऽपि ददृशे तस्मिन् ग्रामे रक्षिजनादृते ॥ ४९ ॥

नातिदूरे स्थलादस्माद् ग्राममन्यं वयं गताः ।
निवेशं चक्रिरे यत्र त्यक्तगेहाः कुटुम्बिनः ॥ ५० ॥

सविस्तरं न आख्याता कथा शिबिरवासिभिः ।
अत्याचारस्य गर्ह्यस्य यथावृत्तं हि बोर्संदे ॥ ५१ ॥

अल्पमात्रक्षता नार्यो वर्त्मनि प्रेक्षिता मया ।
प्रत्यायान्त्यः सरित्तीराज्जलपूर्णघटान्विताः ॥ ५२ ॥

वयं ततोऽभ्यगच्छाम ग्राममन्यं बृहत्तरम् ।
यत्र नैका वसन्ति स्म योषितः क्षतविक्षताः ॥ ५३ ॥

अहो मया महद् घोरं ग्रामेऽस्मिन्नवलोकितम् ।
यदपश्यमहं नारीर्मर्माङ्गेष्वपि हिंसिताः ॥ ५४ ॥

उरसि प्रहृताः काश्चित्पराबृत्तकराः पराः ।
इतराश्च क्षतोपस्था हन्त साक्षान्मयेक्षिताः ॥ ५५ ॥

निश्चिताभिः सुयोषिद्भिः पीडिताभिरपि स्वयम् ।
स्वागतं कृतमस्माकमादरेण तितिक्षुभिः ॥ ५६ ॥

देशभक्तिं विलोक्यासामद्भुतां च सहिष्णुताम् ।
योषितामृजुवृत्तीनामभूमाकुलविस्मिताः ॥ ५७ ॥

प्रस्थानाय नियुक्ताश्चेदपि भूयो गमिष्यथ ।
इति पृष्टा मया नार्यः सोत्साहं मामवादिषुः ॥ ५८ ॥

प्रस्थानं यदि कार्यं नः श्वोऽपि सज्जा वयं स्थिताः ।
सकृदेव हि नश्यन्ति न पुनर्द्विः शरीरिणः ॥ ५९ ॥

जातस्य चेद् ध्रुवो मृत्युर्देशकार्ये वरं मृतिः ।
जीवनं न तु दासस्य देशद्रोहविधायिनः ॥ ६० ॥

निशम्य वचनं तासामद्भुतं विस्मिताऽभवम् ।
अत्यशेरत यस्मात्ता धैर्येण पुरुषानपि ॥ ६१ ॥

उरोभागक्षतामेकामपृच्छमहमङ्गनाम् ।
ध्वजः किं न त्वया त्यक्तो रक्षितव्येऽपि चात्मनि ॥ ६२ ॥

सा च प्राह पताकेयं नासा ग्रामस्य कीर्तिता ।
कथं भद्रे त्यजेयं तां स्वयं ग्रामनिवासिनी ॥ ६३ ॥

देशभक्तिरपूर्वेयं स्वार्थत्यागोऽद्भुतस्तथा ।
ग्राम्याणां खलु पूजार्हौ न तज्ज्ञानं न तद्धनम् ॥ ६४ ॥

स्वराज्यनिष्ठता तासां महोत्साहश्च योषिताम् ।
ह्रेपयेत्सुबहून् पौरान् कातरान् स्वार्थतत्परान् ॥ ६५ ॥

ग्रामाद् ग्राममगच्छाम कृत्स्नेऽपि दिवसे वयम् ।
शृण्वत्यस्तां कथामेकां पश्यन्त्यश्चेतराः क्षताः ।। ६६ ।।

अथ चास्तमिते भानौ न्यवर्तामहि भाद्रणम् ।
अनुकम्पाकुलात्मानः शोचनीयविलोकनात् ।। ६७ ।।

कृतो मया महान् यत्नः प्राप्तया नगरीं पुनः ।
लोकान् ज्ञापयितुं वृत्तं दुःखदं स्वयमीक्षितम् ।। ६८ ।।

अतिवृत्तमिदं सम्यग् विचार्यमिति याचितः ।
अनादृत्य प्रजाक्रन्दमुदासीनः स्थितोऽर्विणः ।। ६९ ।।

बलात्कारोऽपि सोढव्यः पृथिव्यामश्रुतोऽपि सन् ।
दासत्वग्रस्तदेशस्य क्षमाया नापरा गतिः ।। ७० ।।

# अष्टादशोऽध्यायः ।

सारं सत्यव्रतस्येदं तितिक्षा नाम निश्चला ।
स्वातन्त्र्यमनयैव स्यादिति श्रद्धा महात्मनः ॥ १ ॥

अशक्यमपि सम्भाव्यमवाप्तुं दृढनिश्चयैः ।
चरितैर्नरवीराणां दृढीकृतमिदं पुरा ॥ २ ॥

दिवसैरथ गच्छद्भिर्विक्षोभे वृद्धिमागते ।
मुच्यन्तां बन्दिनो मुख्या इत्यासीद्राजशासनम् ॥ ३ ॥

निर्दिष्टेऽथ दिने गान्धिर्विजितात्मा व्यमुच्यत ।
बन्धनाद्बान्धवैरन्यैः सह म्लानैश्चिरं बत ॥ ४ ॥

निशायाश्चरमे यामे दर्शनार्थं महात्मनः ।
मुम्बापुर्यां जनैर्मार्गः सङ्कुलोऽभूत्सहस्रशः ॥ ५ ॥

तदागमप्रतीक्षेषु नागरेष्वर्धरात्रतः ।
प्रत्युपस्येव पुण्यात्मा पुण्यपुर्याः समागमत् ।। ६ ।।

उद्गृणत्सु सहस्रेषु जयघोषं महात्मनः ।
स्मिताननः स आरूढो यन्त्रयानं कृताञ्जलिः ।। ७ ।।

दिव्यवैभसम्पन्नं स्वागतं तन्महात्मनः ।
लोकपूज्यस्य सत्कीर्तेर्नृपतेरपि दुर्लभम् ।। ८ ।।

बहिरन्तश्च सङ्कीर्णं तस्यासीद्वासमन्दिरम् ।
जनौघैर्जयघोषेण नन्दद्भिस्तं दिदृक्षुभिः ।। ९ ।।

यदागच्छं महात्मानं द्रष्टुकामा तदालयम् ।
मणिमन्दिरनामानं दृष्टोऽसौ पर्युपासितः ।। १० ।।

वृत्तान्तवाहकैः कैश्चिन्नानाप्रश्नोत्तरेप्सुभिः ।
चित्रकर्मोद्यतैश्चित्रं वर्णयद्भिर्महात्मनः ॥ ११ ॥

विविधैर्युवकस्तोमैर्देशसेवापरायणैः ।
दर्शनार्थं च संप्राप्तैर्मद्वदन्यैः परःशतैः ॥ १२ ॥

अद्भुतं तस्य माहात्म्यं शास्ति यत्किल भारतम् ।
विभूतिः कापि सा दिव्या न शक्तिः खलु मानुषी ॥ १३ ॥

सात्त्विका ये गुणाः पूर्वं कृष्णेनाभिहिताः स्वयम् ।
ते सर्वे निवसन्त्यस्मिन्नृवरे पुण्यकर्माणि ॥ १४ ॥

निक्षिप्तं विधिना तेजस्तस्मिन् गान्धौ महात्मनि ।
जन्मभूमिं तमोग्रस्तां विद्योतयितुमात्मनः ॥ १५ ॥

न परं भारतं वर्षं विदूरा अपि भूमयः ।
भासिताः सत्यदीपेन ज्वालितेन महात्मना ।। १६ ।।

लोकधर्मपरिग्लानेर्नृपधर्मस्य च क्षयात् ।
सञ्जातः सर्वतः क्षोभो लोकाश्चासन् विपद्गताः ।। १७ ।।

तस्मादधर्मनाशाय प्रशान्तेः स्थापनाय च ।
गान्धिरूपेण भगवानवतीर्णः किमु स्वयम् ।। १८ ।।

* * * *

सत्यं विजयतां लोके
मुक्तं भवतु भारतम् ।
नन्दन्तु सुखिनः सर्वे
देशजाश्च विदेशजाः ।। १९ ।।

इति क्षमायाः कृतिषु सत्याग्रहगीता समाप्ता ।

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १० | जलाभावात्त | जलाभावात्तु |
| ५३ | ३ | सन्दश ... | सन्देश ... |
| ७४ | ७ | प्रवृत्तिहि | प्रवृत्तिर्हि |
| ९७ | ७ | दुरात्मन्याग्ङ्ले | दुरात्मन्याङ्गले |
| १२६ | ८ | माङ्गेष्वभि | माङ्गेष्वपि |